5.2

लघु-ग्रन्थमाला

[ ६२ ]

# पार्वतीमङ्गलम्

प्रणेता सम्पादकश्च

प्रो. पारसनाथद्विवेदी




सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

वाराणसी

LAGHU-GRANTHAMĀLĀ
[ Vol. 62 ]

# PĀRVATĪMAṄGALAM

तार्किकचक्रचूडामणये
काशीपण्डितमण्डलमण्डनाय
पण्डितराजोपाधिविभूषिताय
पं. श्री वशिष्ठत्रिपाठिने
सं. सं. वि. वि. वाराणसेयै उपाध्याय

*WRITTEN & EDITED BY*

**PROF. PĀRASANĀTHA DVIVEDĪ**
Professor & Head, Vedānta Department
Sampurnanand Sanskrit University
Varanasi

विभागाध्यक्षचराय समर्प्यते
इदम् ।

पारसनाथद्विवेदी



VARANASI
2002

*Research Publication Supervisor*—
**Director, Research Institute**
Sampurnanand Sanskrit University
Varanasi.

ISBN : 81-7270-082-2



*Published by*—
**Dr. Harish Chandra Mani Tripathi**
***Director, Publication Institute***
Sampurnanand Sanskrit University
Varanasi-221 002.



*Available at*—
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi-221 002.



**First Edition,** 500 Copies

**Price** : Rs. 20.00



*Printed by*—
**Shreejee Computer Printers**
Nati Imli, Varanasi.

लघु-ग्रन्थमाला

[ ६२ ]

# पार्वतीमङ्गलम्

प्रणेता सम्पादकश्च

**प्रो. पारसनाथद्विवेदी**

आचार्योऽध्यक्षश्च, वेदान्तविभागस्य

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

वाराणसी




**वाराणस्याम्**

२०५८ तमे वैक्रमाब्दे    १९२३ तमे शकाब्दे    २००२ तमे खैस्ताब्दे

*अनुसन्धान-प्रकाशन-पर्यवेक्षकः —*
**निदेशकः, अनुसन्धान-संस्थानस्य**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी।

ISBN : 81-7270-082-2

❒

*प्रकाशकः—*
**डॉ. हरिश्चन्द्रमणित्रिपाठी**
***निदेशकः, प्रकाशन-संस्थानस्य***
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी-२२१००२

❒

*प्राप्ति-स्थानम्—*
**विक्रय-विभागः,**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी-२२१००२

❒

**प्रथमं संस्करणम्** – ५०० प्रतिरूपाणि
**मूल्यम्** – २०.०० रूप्यकाणि

❒

*मुद्रकः—*
**श्रीजी कम्प्यूटर प्रिण्टर्स**
नाटी इमली, वाराणसी।

# भूमिका

लोकोत्तरवर्णनानिपुणकविकर्मरूपमदोषगुणवच्छब्दार्थोभयलक्षणं सालङ्कारं निरलङ्कारं वा काव्यं श्रव्यदृश्यभेदेन द्विविधं प्रोक्तं काव्यशास्त्रविशारदैः। काव्यस्यापि कान्तासम्मितोपदेशरूपत्वाद् हिताहितप्रवृत्तिनिवृत्तिकरत्वाच्च शास्त्रत्वं सिद्धम्। काव्यशास्त्राद्यवेक्षणादित्यादिकाव्यप्रकाशकारकारिकायां काव्यस्य शास्त्रात् पृथगुक्तिर्ब्राह्मणवसिष्ठन्यायेन कान्तासम्मितोपदेशरूपतया प्रभुसम्मितोपदेशरूपेभ्यो वेदपुराणादिभ्यो वैशिष्ट्यप्रकाशायेति वा बोध्यम्। तत्र श्रव्यं श्रोतव्यमात्रम्, दृश्यं दर्शनीयप्रधानम्। श्रव्यकाव्ये श्रवणमात्रेण काव्यार्थसाररसास्वादः। तत्र श्रव्यस्याभिनयोऽवस्थानुकाररूपोऽपेक्ष्यते। दृश्ये पुनः श्रवणासत्त्वेऽपि काव्यार्थस्य दृश्यत्वमभिनेयत्वमपेक्ष्यते। या काव्यार्थस्याभिनेयता सैव तस्य दृश्यता नाम। तत्राभिनयो नाम दृश्यकाव्ये वर्णितानां रामादिनायकादीनां परमार्थभूतावस्थानमनुकारः। अत एव दृश्यं काव्यं रूपस्य नायकादेरारोपाद् नटादावनुकृतत्वाद् रूपकमित्युच्यते। स चाभिनयोऽवस्थानुकाररूप आङ्गिकवाचिकाहार्यसात्त्विकभेदेन चतुर्धा भिन्नः। अङ्गेन हस्तपादादिना निष्पाद्य आङ्गिकः, वाचाभिनयेन निष्पाद्यो वाचिकः। आहरणं धारणं तद्योग्यमाहार्यम्। छत्रचामरमुकुटधनुर्बाणवस्त्रालङ्कारधारणैरवस्थानुकारोऽभिनय आहार्यः। सात्त्विकभावस्वेदरोमाञ्चादिभिर्निष्पाद्यः सात्त्विकः। यथोक्तं दर्पणे—

**भवेदभिनयोऽवस्थानुकारः स चतुर्विधः।**
**आङ्गिको वाचिकश्चैवमाहार्यः सात्त्विकस्तथा ।।** (साहित्यदर्पणे, ६.२)

नाट्यशास्त्रे—

**विभावयति यस्माच्च नानार्थान् हि प्रयोगतः।**
**शाखाङ्गोपाङ्गसंयुक्तस्तस्मादभिनयः स्मृतः ।।**

चतुर्भिः प्रकारैः सर्वासां दृश्योक्तानामवस्थानामनुकारः समाप्यते। अतोऽभिनयप्रधानं दृश्यं काव्यम्।

**दृश्यकाव्यस्य वैशिष्ट्यम्**

समानविषयकं प्रत्यक्षं शाब्दाद् बलवद् भवतीति लोकसिद्धम्। यच्च महाकविभी रामादिलोकोत्तरचरितं शब्देन वर्णितं यदि आङ्गिकादिचतुर्विधाभिनयेन

स्वात्मनि आरोप्य नटादिः चिराभ्यासपाटवादिभिः प्रदर्शयति तच्चमत्कारातिशयमावहति। काव्यार्थस्य सम्यक् प्रतिपत्तिर्भवति। श्रव्ये काव्ये श्रवणमात्रात् तत्तदुपवर्णितविभावाद्याकाराकारितमनोवृत्त्युल्लासमात्रं भवति, तेन च स्वात्माभिन्नानन्दरसास्वादो जायते। दृश्ये पुनः उक्तचतुर्विधप्रकाराभिनयेनारोपितदुष्यन्तत्वादिभिर्नटादिभिरुपनीतविभावाद्याकारचित्तवृत्तिभिर्बहिर्निःसृतै रसोदयोऽक्लेशेन सुतरां भवति। एवं नटादिकौशलाद् अभिनयवैशारद्यात् कौतुकातिशयावहत्वात् प्रत्यक्षविषयत्वाच्चास्ति दृश्यकाव्यस्य वैशिष्ट्यम्। न च नटादौ प्रावीण्यभाञ्जि रामादिविषयकविज्ञानस्याहार्यारोपरूपत्वाद् अनाहार्यारोपरूपत्वाद् वा परमार्थत्वासहभावाद् भ्रमविज्ञानेन जायमाने रसे भावे वा तदाभासत्वमेवेति काव्यम्। नटादौ रामत्वादिभावविज्ञानरूपभ्रमत्वाभावाद् उत्तरकालेऽबाधात्। तादृशविज्ञानस्य प्रमाऽप्रमाकोटिबहिर्भावात्। किञ्च नटाद्युपस्थापितानां विभावादीनां रत्यादिस्थायिभावास्वाद्ययोग्यतापादकानां विगलितप्रमातृसम्बन्धविशेषत्वात् सामान्येनोपस्थितानां विलक्षणानां भ्रमप्रमोभयकोटिविलक्षणलोकोत्तरविज्ञानविषयत्वं न विरुध्यते। उपपादितञ्चैतत् काव्यप्रकाशादौ तत्रैव विस्तरतो द्रष्टव्यम्।

किञ्च परोक्षविज्ञानाद् प्रत्यक्षविज्ञानं चमत्कारातिशयकारीति लोकप्रतीतिः। न हि अभिनायके नटादावपि नटत्वबुद्धिः। न चोपस्थापितविभावादौ स्वत्वपरत्वौदासीन्यबुद्धिः। न च रसानुभवो भ्रमः प्रमा वा। न वा सविकल्पो निर्विकल्पो वा। तस्माल्लोकोत्तरसामग्रीसचिवः स्थायी आस्थाय्यतां नीतो रसो भवति। स च दृश्येऽधिकचमत्कारी। चमत्कारस्यैव रससारत्वम्। उक्तञ्च—'रसे सारः चमत्कारः'। अतो दृश्यं श्रव्यमतिशय्य वर्तते।

**दृश्यकाव्यभेदाः**

तच्च दृश्यं रूपकापरपर्यायं दशविधं शास्त्रकारैर्वर्णितम्, यथोक्तं दर्पणे—

**नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः।**
**ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश।**

किञ्चाष्टादशोपरूपकाण्यपि शास्त्रे वर्णितानि सन्ति, तत्रैव—

**नाटिका त्रोटकं गोष्ठी सट्टकं नाट्यरासकम्।**
**प्रस्थानोल्लाप्यकाव्यानि प्रेङ्खणं रासकं तथा।।**
**संलापकं श्रीगदितं शिल्पकञ्च विलासिका।**
**दुर्मल्लिका प्रकरणी हल्लीशो भाणिकेति च।।**

**अष्टादश प्राहुरुपरूपकाणि मनीषिणः।**
**विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम्।।**

एतेषां सर्वेषामेव प्रकरणादारभ्य भाणिकापर्यन्तानां दृश्यकाव्यानां सामान्येन विशेषं विना लक्षणं नाटकवदेव बोध्यम्। विस्तरभयादेतेषां सर्वेषां विशेषलक्षणानि भेदाश्चात्र नोच्यन्ते।

**नाटकलक्षणम्**

प्रकृतं पार्वतीमङ्गलं नाम नाटकं श्रीशिवरात्रिमहोत्सवेऽभिनयाय प्रकाशितं श्रीविश्वनाथविषयकरतिभावप्रधानम्। इदं सहृदयानां भक्तानां मनोविनोदाय श्रीसाम्ब-शिवप्रीत्यर्थं स्वमनस्तोषाय च। तत्र—

**नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम्।**
**विलासर्ह्यादिगुणवद् युक्तं नानाविभूतिभिः।।**

**सुखदुःखसमुद्भूतिर्नानारसनिरन्तरम्।**
**पञ्चादिका दशपरास्तत्राङ्काः परिकीर्तिताः।।**

**प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान्।**
**दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः।।**
**एक एव भवेदङ्गी शृङ्गारो वीर एव वा।**
**अङ्गमन्ये रसाः सर्वे कार्यो निर्बहणेऽद्भुतः।।**

**चत्वारः पञ्च वा मुख्याः कार्यव्यापृतपूरुषाः।**
**गोपुच्छाग्रसमाग्रं तु बन्धनं तस्य कीर्तितम्।।** (सा.द. ६)

श्रीशिवदिव्यनायकं श्रीपार्वतीदिव्यनायिकं ख्यातवृत्तं पञ्चसन्धिसहितं ऐश्वर्यादिगुणसुखदुःखसमुद्भूतिनानारसभावभरितं पञ्चभिरङ्कैः क्रोडीकृतं भक्तिरसाङ्गिकं शोभनबन्धं पार्वतीमङ्गलं नाटकमेवेदम्।

**प्रस्तावकः**

तत्र पूर्वरङ्गप्रसङ्गे नान्दीपाठो देवी-सतीत्यादिभिर्द्वादशपादैः कृतः। तत्-स्वरूपमुक्तं दर्पणे—

**आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते।**
**देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता।।**

**माङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी।**
**पादैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत।।**

नटपारिपार्श्विकयोः प्रस्तुताक्षेपिभिः शिवसतीमाहात्म्यवर्णनैः प्रस्तावना क्रियते। सा प्रस्तावना आमुखापरपर्याया कथोद्घातनाम्ना शास्त्रे प्रसिद्धा। यथोक्तम्—

**सूत्रधारस्य वाक्यं वा समादायार्थमस्य वा।**
**भवेत् पात्रप्रवेशश्चेत् कथोद्घातः स उच्यते।।** (सा.द.६.३५)

पञ्चविधलक्षणलक्षिताः प्रस्तावना वर्णिताः सन्ति।

**उद्घातकः कथोद्घातः प्रयोगातिशयस्तथा।**
**प्रवर्तकावलगिते पञ्च प्रस्तावनाभिदाः।।** (सा.द.६.३३)

प्रथमं प्रवेष्टुः पात्रस्याभिप्रेतार्थे स्थापकस्य सूत्रधारादेरभिप्रेतार्थे उद्घाट्यतेऽन्तर्लीयतेत्युद्घातको नाम प्रस्तावना उच्यते। नटाद्युक्तपदानि अन्यार्थान्यपि स्वाभिलषितार्थे संयोज्य यत्र पात्रप्रवेशः सा उक्ता प्रस्तावनेति भावः। यत्र च सूत्रधारवाक्यं वा तदर्थं वा यथाश्रुतं न त्वन्यर्थे प्रयुक्तं नीतं वा आदाय पात्रप्रवेशश्चेत् कथोद्घातः।

यद्येकस्मिन् प्रयोगे सम्प्राप्तेऽन्यप्रयोगः प्रयुज्यते तेन पात्रप्रवेशश्चेत् प्रयोगातिशय उच्यते। यदि सूत्रधारः कालादिमाश्रित्य वर्ण्यते तेन पात्रप्रवेशश्चेत् प्रवेशक उच्यते। यदि चैकस्मिन् विषये एकस्योपमेयस्य समावेशाद् उपमानभूतस्य पात्रस्य प्रवेशश्चेदवलगितं नाम प्रस्तावनोच्यते।

**वस्तु**

इतिवृत्तं वस्तु, अत्र नाटके शिवपार्वतीविवाहः प्रधानं तदेवाधिकारिकं प्रासङ्गिकं तु कामविजयादि। अधिकारिवस्तुसिद्ध्यर्थमेवान्यत् पताकाप्रकरीस्थानीयं प्रासङ्गिकं वृत्तं योजितम्।

तत्र रामविरहादिवर्णनं प्रकरीवृत्तं दक्षविद्वेषवर्णनञ्च ततो व्यापित्वात् पताकारूपं द्रष्टव्यम्।

अर्थोपक्षेपाय च विष्कम्भको योजितः, तल्लक्षणं यथा—

**वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः।**
**सङ्क्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः।।**

अत्र नाटके द्वितीयाङ्कादौ योजितः। तथाङ्कद्वयान्तर्निवेश्यः प्रवेशकोऽपि चतुर्थेऽङ्के शृङ्गिभृङ्गिसंवादरूपेण निवेशितः। अस्मिन्नाटकेऽर्थप्रकृतयोऽपि यथासम्भवं योजिताः सन्ति। अर्थप्रकृतयो नाट्यवस्तुनः स्वभावभूताः पञ्च भवन्ति—

**बीजं बिन्दु पताका च प्रकरी कार्यमेव च।**
**अर्थप्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधि।।**

अत्र नाटके पार्वत्यधिगतिः फलम्, तस्य बीजं प्रथमाङ्क एव सूत्रधारवाक्ये निक्षिप्तमस्ति—भूयाद् गिरीन्द्रतनयावर एष नित्य इत्यादिरूपे। एवम्—

**मुखं प्रतिमुखं गर्भो विमर्श उपसंहृतिः।**
**इति पञ्चास्य भेदाः स्युः क्रमाल्लक्षणमुच्यते ।।**

इत्यादिदर्पणवाक्यैरुक्ता मुखप्रतिमुखादिसन्धयोऽपि क्रमशो योजिताः सन्ति। अन्तिमेऽङ्के निर्बहणसन्धौ शिवविवाहे भूतपिशाचलीलाऽपि अद्भुतरसोल्लसिका योजिताऽस्ति।

कार्यस्य फलस्य पञ्चावस्था आरम्भयत्नप्राप्त्याशानियताप्तिफलागमरूपा अपि यथायथं सुयोजिताः सन्तीति सुधीभिराकलनीयमेतत्। अन्ते च भरतवाक्येन नाटकमिदं परिपूर्णतां प्राप्तम्।

**नायकः**

अत्र नाटके भगवान् महेश्वर एव नेता, नेत्री च भवानीति सुविदितम्।

**रसः**

अत्र शिवपार्वतीविषयको भाव एव प्राधान्येन भ्राजते। भावप्रधानमेव नाटकमिदं भक्तिप्रवणताकरमिति महदुपकारकं लोकानाम्। नातिसङ्क्षिप्तं नातिविस्तृतं भक्तिभावसमन्वितं नाटकमिदं संसाराग्निपरितप्तानां जनानां कृतेऽमृतसेकमिवाभाति। नानाव्यापारव्यस्ते युगेऽस्मिन् लघुनाटकानामेतादृशानामस्ति महानुपयोग इति लोकदृष्ट्याप्यस्य महत्त्वमतिरोहितम्।

एवं स्वलघुमत्योपस्थापितमिदं सहृदयानां गुणग्राहिणां यदि किञ्चिदप्युपकारं करोति, तदास्योपस्थापनसाफल्यं मन्ये। तदत्र दोषान् परिहृत्य सज्जनाः क्षमावन्तः सुधियस्तृप्तिमुपगच्छन्त्विति साभिलाषो भक्त्या श्रद्धया चेदं पुष्पोपहाररूपं भवानीविश्वनाथयोश्चरणारविन्देषु समर्पयन् सन्तुष्यामीति।

अथ च दृश्यरूपमिमं ग्रन्थं प्रस्तुवन् कृतज्ञोऽहमुपकारिणां महानुभावानां मान्यमान्यानां कृतज्ञतां प्रकटयामि। तत्र प्रथमं महामान्यानां सरल-

हृदयानामगाधपाण्डित्यपूर्णानां वेदान्तशास्त्रपयोधिपारदृश्वनां कुलपतिपदभाजां **प्रो. राममूर्तिशर्मणां** कुलपतित्वे तदुपकारित्वे चेदं काव्यं प्रकाशतामगमदिति तान् प्रति कृतज्ञतां हार्दिकीं प्रकटयन् भूयो भूय: प्रणमामि। अथ च प्रकाशननिदेशकानां नानाविधमहत्त्वशालिग्रन्थप्रकाशनतत्पराणां स्वभावत एवोपकारपराणां **डॉ. हरिश्चन्द्रमणित्रिपाठिवर्याणा**मुपकारं स्मारं स्मारं कृतज्ञतामावहामि।

अत: परं सहायकसम्पादकानां सरलचित्तानां **डॉ. ददनउपाध्यायानां** कार्यकलां प्रशंसन् चाशीराशिभिरभिनन्दामि। तत: परमीक्ष्यशोधकानां **डॉ. हरिवंशकुमारपाण्डेयाना**मुपकारमावहन् तेषामभ्युदयार्थं चिरायुष्यार्थञ्च भगवन्तं प्रार्थयमान आशीर्वचोभिस्तमभिनन्दामि। श्रीजीकम्प्यूटरप्रिण्टर्स-सञ्चालकानां **श्रीअनूपकुमारनागर**महोदयानां कृतज्ञतां प्रकटयन् आशीर्वादाम् प्रददामि, तैर्महता श्रमेणास्य काव्यस्य सुस्पष्टं सुन्दरं मुद्रणं विधाय महोपकार: कृत:।

अन्ते चेमं ग्रन्थं सश्रद्धया सभक्त्या श्रीसिद्धिदात्री-जैगीषव्येश्वरमहादेवयो-र्भवानीविश्वनाथस्वरूपयो: श्रीचरणकमलेषु प्रणतिपरम्परापूर्वकं समर्पयन् विद्वद्भ्य: प्रणामाञ्जलिं विधाय ग्रन्थलेखेषु त्रुटिक्षमार्थं सर्वान् प्रार्थयमानो विरमामि।

**वाराणसी**
वसन्तपञ्चमी,
२०५८ विक्रमाब्द:

विदुषां वशंवद:
**पारसनाथद्विवेदी**
आचार्योऽध्यक्षश्च, वेदान्तविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

# पात्र-परिचयः

**पुरुषपात्राणि**

| | |
|---|---|
| १. सूत्रधारः | प्रधानो नटः |
| २. नटः | प्रधाननटस्य सहायकः |
| ३. शिवः | भगवान् शङ्करः |
| ४. रामः | दशरथनन्दनः |
| ५. लक्ष्मणः | रामस्यानुजः |
| ६. नन्दिकेश्वरः | शिवस्य गणेश्वरः |
| ७. गणः | शिवस्य दूतः |
| ८. वीरभद्रः | शिवस्य दूतः |
| ९. दक्षः | सत्याः पिता दक्षप्रजापतिः |
| १०. भृगुः | दक्षस्य गुरुः |
| ११. शृङ्गी | शिवस्य गणेश्वरः |
| १२. भृङ्गी | शिवस्य गणः |
| १३. नारदः | देवर्षिः |
| १४. हिमाचलः | पर्वतराजः, उमायाः पिता |
| १५. इन्द्रः | देवानां राजा |
| १६. कामः | कामदेवः |
| १७. ब्रह्मा | सृष्टिकर्ता देवः |
| १८. ब्रह्मचारी | वटुवेषधारी शिवः |
| १९. विष्णुः | पालनकर्ता देवः |

**स्त्रीपात्राणि**

| | |
|---|---|
| १. सती | भवस्य पत्नी, दक्षपुत्री |
| २. अपराजिता | सत्याः सखी |
| ३. मेना | हिमाचलस्य पत्नी, उमायाः माता |
| ४. उमा | पार्वत्यपरनाम्नी हिमाचलस्य कन्या |

●

आचार्यश्रीपारसनाथद्विवेदिविरचितं

# पार्वतीमङ्गलम्

## अथ प्रथमोऽङ्कः

नान्दीपाठः :

देवी सती शिवमयी करुणैकमूर्त्ति-
नित्या हिमाद्रितनया भवमाश्रिता या ।
कल्पद्रुमाधिगतकल्पलतेव भाति
भूयाच्छिवाय भवतां भजतां सदा सा ।।१।।

पुष्पाञ्जलिः प्रणतभक्तजनार्थकल्पा
विश्वेश्वरं भगवती शिवमर्चयन्ती ।
प्रोद्भिन्नकञ्जनिचयैरुदयाचलार्क
पूर्वा विभाति वररागवतीव सन्ध्या ।।२।।

सौभाग्यमङ्गलकरी ललिताङ्गशोभा-
भासा गिरीशवरराजगृहे भ्रमन्ती ।
लक्ष्मीरिवास्तु नवविग्रहबालरूपा
भूयः प्रदीपकलिकेव तमोपहा वः ।।३।।

(नान्द्यन्ते सूत्रधारः)

सूत्रधारः : (प्रविश्य, परितो विलोक्य) अये! कथं समवेता एव आर्यास्तत्रभवन्तः पारिषदाः। महान् प्रमोदः, तद् यावन्नागच्छति मम सखा तावदार्यमिश्रान् भवतो विज्ञापयामि—

अस्ति खलु सिद्धपरम्परापरिपूतो विविधविद्याविधानबन्धुरो विबुधवाग्वैभवविभूषितो गाजीपुरमण्डलान्तर्गतः सिद्धपीठो 'हथियाराम' इति विख्यातो मठो नाम। तत्र बहवो महात्मानः सिद्धास्तपोधनाः सुचरिता यतयो बभूवुः। तेषां सिद्धानां सिद्धासनपरम्परायां तपोमूर्त्तयोऽधिगताखिलवेदवेदाङ्गा अद्वैतवेदान्तसिद्धान्तानुरक्ताः श्रीविश्वनाथचरणैकभक्ता ब्रह्मनिष्ठाः सकलसंन्यासिमण्डलमहामण्डलेश्वराः

श्रीकाशीस्थश्रीविश्वनाथगुरुकुलसंस्कृतमहाविद्यालयाध्यक्षाः श्रीपावाहारिबालकृष्ण-यतिमहाराजाः सम्प्रति प्रतिष्ठिताधिष्ठिता राजन्ते विद्यार्थिवृन्दकल्पद्रुमाः। तैरादिष्टा वयं भवतां मनोविनोदाय। श्रीकाशीस्थहथियाराममठसम्बद्धश्रीजैगीशव्येश्वर-(जागेश्वर)मठे सद्यः सर्वकामदस्य जैगीशव्यमहर्षिस्थापितस्य सर्वसिद्धिप्रदस्य सिद्धिदात्रीजगदम्बाभवानीसहितस्य श्रीजैगीशव्येश्वरमहादेवस्य परमपूजकैर्वीतरागैः श्रीस्वामिशिवानन्दैरनुज्ञाताश्च तदद्य शिवरात्रिमहोत्सवे युक्तो भवतां समवायः। मनोविनोदश्च मधुरया गिरा भवतीति मन्यामहे। यतः—

**वाणी महाकविगिरेः प्रभवा पवित्रा**
**मन्दाकिनीव मधुरा सरसा सुशीता ।**
**तप्तान् सुतर्पयति संसृतिशोकमग्नान्**
**स्वेनामृतेन सकलान् भुवनत्रयेऽपि ।।४।।**

**नटः** : (प्रविश्य) साधु! साधु! एवमेतत् कः सन्देहः।

**श्रेयस्करी श्रुतपदा भवतापहीना**
**कान्ता हिता रुचिरवर्णभृता प्रसन्ना ।**
**दिव्यार्थबोधललिता सुकविप्रयुक्ता**
**वागेव रञ्जयति संजयतीह लोके ।।५।।**

**सूत्रधारः** : अहो! सत्यम् उच्यते।

मारिष! कथय अस्माकं कलादर्शनोत्सुकानां सहृदयानां सामाजिकानां विनोदाय किं युष्माभिरनुष्ठितम्।

**नटः** : भाव! विदितमेतद् भवतां यदद्य अस्माभिः सर्वैः कुशीलवैः "पार्वतीमङ्गलम्" नाम नाटकमभिनेतव्यमिति।

**सूत्रधारः** : सुष्ठु स्मारितोऽस्मि। तच्चाभिनवं नाटकं श्रीभवानीजैगीशव्येश्वर-महादेवचरणारविन्दमकरन्दरजोलुब्धेन तत्कृपैकभाजनेन पदवाक्यप्रमाण-पारावारपारीणब्रह्मविद्वरिष्ठपण्डितश्रीदेवस्वरूपमिश्रशिष्येण राम-सखीशिवशङ्करात्मजेन पारसनाथाभिधेन द्विवेदिना कविना स्वान्तःसुखाय कृतं साम्बशिवप्रीतये च।

**नटः** : सत्यम्, एतन्नाटकं साम्बशिवविचित्रलीलालसितं भक्तिरसायनमस्ति।

**सूत्रधारः** : युक्तञ्चैतत् शिवरात्रिमहोत्सवे प्रस्तुते साम्बशिवप्रीतये भक्तजना-नुरञ्जनाय च।

नटः : एवमेतत्।

सूत्रधारः : **एषा सभा शैलसुतेशपादा रविन्दभक्तैर्लसिता विभाति ।**
**काव्यञ्च तद्भक्तिरसप्रपन्नं नेत्रैरनेकैः पिबताच्च कर्णैः ।।६।।**

नटः : एवं भक्त्या परितुष्टः शिवः श्रेयो विधास्यति।

सूत्रधारः : अत्र कः कल्पः। करुणावरुणालय आशुतोष उच्यते शिवः।

नटः : सच्चिदानन्दो भगवान् भक्तान् पालयन् यथेच्छं विचरति।

सूत्रधारः : एवमेतत्, मायाधीशोऽनादिमायया भवान्या सह स्वेच्छया पूर्णकामोऽपि विहरति जगत्याम्।

नटः : एवमेतत्, परमदयालुरसौ!

**भूयात् सदा शशिधरः परबोधरूपः**
**पीत्वा ररक्ष भुवनानि हलाहलं यः ।**
**श्रेयो निमित्तमिह यः करुणावतारः**
**सद्यः प्रभुः प्रणमतां भजतां जनानाम् ।।७।।**

सूत्रधारः : एवम्,

**भूयाद् गिरीन्द्रतनयावर एष नित्यो**
**लोकानुरञ्जनकरः कृपया परात्मः ।**
**स्वेच्छं चरत्यखिललोकपतिः पृथिव्यां**
**यो नः सदा भवतु दक्षसुतासहायः।।८।।**

नटः : भाव! सत्यं भवतु।

सूत्रधारः : साधयावस्तावत् कार्यनिष्पादनाय। (इति निष्क्रान्तौ) इति प्रस्तावना।

(ततः प्रविशति यथोक्तः सतीसहायः शिवः)

शिवः : देवि! अपि मया सह भुवनानि विचरन्ती रमसे? अपि विलोकिता त्रिलोकी?

सती : प्रभो! न किञ्चिदपि दृष्टवती ।

शिवः : किं व्यक्तमपि जगत् न दृश्यते भवत्या?

सती : भवतोऽतिरिक्तं न दृश्यते।

शिवः : तर्हि न रमसे वृथा भ्रान्तम्।

सती : भवति सति सदा रमे। न च वृथा भ्रान्तम्। भवतो महिमानं दृष्टवती।

शिवः : प्रिये! रामस्य महिमाऽयम्।

सती : कोऽयं रामः?

शिवः : **रामः प्रभुः सकलदेवमयः परात्मा**
**दृश्योद्भवस्थितिलयाश्रयपूर्णकामः।**
**लीलामनुष्यतनुरत्र वसुन्धरायां**
**जातो महारघुकुले जगतां हिताय ।।९।।**

सती : सत्यमेवैतद् भगवान् प्राह; किन्तु श्रूयते खलु—
**रामो महागुणयशा रघुवंशनाथः**
**श्रेष्ठः सतां जगति सर्वधनुर्धराणाम् ।**
**लोकप्रियो नृपसुतः करुणैकसिन्धुः**
**सीतापतिर्नरकुलोत्तमसुप्रसिद्धः ।।१०।।**

शिवः : देवि! किमुच्यते रामो मनुष्य इति, नेदं शोभनम्। रामो मायामनुष्य इति वक्तव्यम् ।

सती : किमिदं मायामनुष्य इति?

शिवः : **साक्षात्परं ब्रह्म चिदेकरूपं त्राणाय धर्मस्य निजप्रियस्य ।**
**कर्तुं जगत्पावनचारुवृत्तं स्वमाययाऽभूत् नरदेहधारी।।११।।**

सती : एवमेतद् देव! अवदधामि।

शिवः : प्रिये! जानासि शिवलोकं विहाय किमर्थं वसुधायामिह चरामि?

सती : छायेव भवतोऽनुगन्तुं जानामि। न किञ्चिदन्यत्।

शिवः : इदानीं धन्योऽयं वसुधाभागः।

सती : कोऽयं वसुन्धराया भागो यो भवता प्रशंसनीयो भवति।

शिवः : अयं भारतवर्षस्य पुण्यमयस्य पुण्यतमो मध्यभागो दण्डकारण्यमिति जनेषु प्रसिद्धः,
**धर्मात्मनो मुनिजनान् वनवासिनस्तान्**
**रक्षः कुलं प्रविचरद् विनिहन्ति यत्र ।**
**पूतस्तपस्विकुल्कर्मविबोधनैर्यः**
**सोऽयं महागिरिगुहागहनः प्रदेशः।।१२।।**

सती : ज्ञातम्। शिवलोकादपि का धन्यताऽस्य?

**शिवलोकमहानन्दमात्राल्पापि न लक्ष्यते।**
**वसुधा दण्डकारण्ये किमर्थं स्तूयतेऽधुना।।१३।।**

शिवः : परमानन्दरूपस्य ब्रह्मणो रामस्यानन्दमात्रया सर्वे लोकाः सुखावहा दृश्यन्ते। न च स्वतस्तेषां सुखरूपता।

सती : व्यापकं ब्रह्म सत्यं ज्ञानमनन्तमिति श्रूयते। तत् समानमेव सर्वम्।

शिवः : सर्वगतं चिन्मयं रामं सर्वत्र पश्यामि। नात्र कश्चिदभिलाषः।

सती : तर्हि पूर्णकामस्य भवतः क्वचित् काभिलाषा?

शिवः : देवि!

**भावो ममास्ति सविशेषवपुर्धरस्य श्रीलीलया दशरथात्मजसुन्दरस्य ।**
**रूपेऽद्भुते गुणपरिग्रहनिर्मितस्य प्रीते चकोरसदृशस्य कलाधरस्य ।।१४।।**

सती : तत् श्रीरामदर्शनमभीष्टं भवताम्। तदर्थमिह वसुधातले सञ्चरणमिति मन्ये।

शिवः : सम्यग् ऊहितं देव्या। तदर्थमेव शिवलोकं विहाय वसुधायां दण्डकारण्ये चरामि।

**सगुणो निर्गुणो वाऽपि न रामे दृश्यते भिदा ।**
**विशेषानन्दहेतुत्वात् सगुणे प्रीतिरिष्यते ।।१५।।**

सती : रामदर्शनमिष्टञ्चेत् अयोध्या गन्तव्या।

शिवः : (अश्रवणं नाटयन्)

**कदा नु लोके कृपयोपलब्धं गुणाभिरामं विमलं महान्तम् ।**
**नीलोत्पलश्यामतनुं दयालुं कलङ्कशून्यं प्रियरामचन्द्रम् ।।१६।।**

सती : ननु तद्दर्शनाय अयोध्या गन्तव्येति प्रोक्तम्।

शिवः : (स्वगतम्) रामभावानुसक्तचेतसा न सतीवाक्यं गृहीतं मया। (प्रकाशम्) देवि! यत्र रामः सैवायोध्या ।

**रामशून्या गृहारामशतसङ्कुलिताऽपि सा ।**
**नायोध्या, यत्र रामस्तु सायोध्या परमा मता ।।१७।।**

सती : क्व रामस्तर्हीदानीम्?

**शिवः** : अपि न श्रुतं देव्या। कैकेयीवरदानमोहितेन स्ववचनं सत्यापयता महाराजदशरथेन निर्वासितः सीतानुजाभ्यां सहितश्चतुर्दशसमा वस्तुं दण्डकं प्रविष्ट इति।

**सती** : (सखेदम्) कष्टम्! रामनिर्वासनं श्रुत्वा व्यथते मे मनः।

**शिवः** : **निर्वास्य तं पुरजनप्रियरामचन्द्रं वित्तं पुरस्कृतवती परिहाय धर्मम्।**
**मानं यशःप्रियपतिं स्वयमीश्वरञ्च चक्रे तमो जगति केकयराजपुत्री।।१८।।**

**सती** : असाधुदर्शिनी सा,

**कथं प्रियं सर्वजनानुरक्तं रक्तोत्पलाक्षं गुणवन्तमीशम्।**
**अदोषधर्मिष्ठमहाकृतज्ञं निर्वासयामास सुतं शुभाङ्गम्।।१९।।**

**शिवः** : देवि! तस्यैव सर्वान्तर्यामिणो भगवतो मायाचेष्टितमिदम्।

**सती** : सत्यं भगवान् वदति।

**शिवः** : अस्मिन्नेव प्रदेशे इदानीं रामः समागतः।

**सती** : अत एवायं प्रदेशो धन्यतम इति देवेनोक्तम्।

**शिवः** : एवमेतत्,

**दूर्वाङ्कुरश्यामलकान्तगात्रं सबाणचापासिकरः कृपालुः।**
**सीताद्वितीयः सरसीरुहाक्षः यत्रास्ति रामो भुवि तद् वरीयः।।२०।।**

**सती** : किं तत्र विदेहराजतनया महाभागा सीतापि सङ्गता?

**शिवः** : देवि! कष्टम्।

**सती** : किमत्यहितं देव्याः?

**शिवः** : रावणेन दुरात्मना रक्षसा मायया अपहृता सा।

**सती** : हा महाकष्टम्। निर्मर्यादं जगज्जातम्।

**शिवः** : एतदपि तस्यैव परमात्मनो लीलाचेष्टितम्। न च रामेण परेण ब्रह्मणा वियुक्ता आदिशक्तिः सीता।

**सती** : तदपि लोके महान् स्त्रीपरीभावः।

**शिवः** : लोकश्रेयसे भगवान् सर्वोपायेन प्रवर्तते। अपि च देव्याः सीतायाश्चारित्र्यप्रकर्षोऽनेन भविष्यति।

**सती** : सत्यम् (सखेदम्)

**हीत्वार्थकामौ पतिदेवता सा सीता विदेहेशसुता शुभाङ्गी ।**
**अचिन्तयन्ती वनवासकष्टं रामं श्रिता चन्द्रमसं प्रभेव।।२१।।**

सा कथमद्य तं विना भविष्यति।

**शिवः** : देवि! अशोच्यमचिन्त्यं रामविधानम्।

**सती** : यथाह देवेशः।

**शिवः** : तदा प्रभृति भगवान् सह लक्ष्मणेनास्मिन्नेव वनोद्देशे तामन्वेषयन् वर्तते।

(ततः प्रविशति लक्ष्मणानुगतो रामो विमना वैकल्यं नाटयन्)

**रामः** : वत्स! सौमित्रे! न मनः शोकवेगो धैर्यसेतुं सहते। हा प्रिये! राममानसचारुराजहंसि!

**क्वासि प्रिये जनकराजसुते वराङ्गि !**
**अन्तर्हिता सततमानस राजहंसि !**
**त्वामन्तरेण सरसीरुहलोचनेऽहं**
**नीरश्मिरस्मि विरहार्कनिरस्तचन्द्रः।।२२।।**

हा हा! प्रिये! सीदन्ति गात्राणि !

**चारुस्मितं प्रियवचांसि सुधामयानि !**
**पूर्णेन्दुशोभिवदनं वरकञ्जनेत्रम् !**
**मद्बाहुकल्पलतिके! हृदयाब्जलक्ष्मि !**
**स्मृत्वा हतोऽस्मि तव कोमलकान्तगात्रि!।।२३।।**

(इति मूर्च्छति)

**लक्ष्मणः** : आर्य! आर्य! समाश्वसिहि, समाश्वसिहि।

**रामः** : (समाश्वस्य) वत्स!

**आश्वासितेन हृदयेन च जीवितेन**
**देहेन शोकहुतभुग् ज्वलितेन किं मे ।**
**प्राणाः प्रयान्तु लघु यत्र मनोरथश्रीः**
**सीता प्रिया गतवती जनकात्मजा सा ।।२४।।**

**लक्ष्मणः** : आर्य! न खलु सीताधिगमोपायोऽयम्। तस्माद् धैर्येण वर्त्तितव्यम्।

मैवं प्रभो! धृतमहावरचापहस्त!
शोकं कृथा रघुकुलाब्जसहस्त्ररश्मे!
आलम्ब्य धैर्यमधुना विषमे विचिन्वन्
सीतामवाप्स्यसि मया सह लक्ष्मणेन।।२५।।

रामः : क्व सीता वर्तते। राक्षसैः कृतवैरैर्नियतं भक्षिता सा! कष्टम्।

अद्यापि नाम न मया नरशब्दभाजा
सीता विदेहतनयाधिगता वनानि।
कान्तारघोरगिरिदुर्गमकन्दराणि
यत्नेन हन्त! सकलानि विचिन्वतापि।।२६।।

(इति पुनर्मोहं नाटयति)

लक्ष्मणः : किं पुनर्मोहमुपगत आर्यः। आर्य! समाश्वसिहि, समाश्वसिहि।

रामः : वत्स! किं दृष्टा सा। इहैव तु अभूत्, पुनः क्व गता। हा! प्रिये!

कृत्तं मनोऽन्धतमसाकुलितं विभिन्नं
तप्तं वपुर्विरहितं घनचन्दनाङ्गि!।
दृष्टा भवाशु दयया मम चारुहासे!
त्वामन्तरेण न हि जीवितुमुत्सहेऽहम्।।२७।।

लक्ष्मणः :

विहाय कातर्यममोघशक्ते! समाश्रयन् पौरुषमात्मतुल्यम्।
चिनुष्व राजन् गिरिकन्दराणि मया सहैवापदि भाति धैर्यम्।।२८।।

रामः : वत्स! एवं स्थिरीक्रियते आत्मा। तद् गत्वा गोदावरीं पृच्छेव।

लक्ष्मणः : (सोत्साहम्) एवमेतत्। (इति निष्क्रान्तौ)

शिवः : (साञ्जलिं तदुन्मुखः प्रणामं नाटयन्)

नमो नमोऽनन्तसहस्त्रलील! समस्तविश्वेश चिदेकसत्य।
परात्ममायाधिपते सुरेश! अशेषशेषाश्रय निर्विशेष!।।२९।।

(सतीं प्रति) देवि! अपि साक्षात्कृतो रामः सानुजः।

सती : देव! सानुजो रामः प्रत्यक्षीकृतः।

**शिवः** : किमिव धारितम्।

**सती** : (सविस्मयम्) ननूक्तं देवेन परं ब्रह्म राम इति।

**शिवः** : अत्र कः सन्देहः?

**सती** : विषमं प्रतिभाति,

**परं ब्रह्म समं प्राप्तं निर्मायं जगदाश्रयम् ।**
**आप्तकामं कथं नाम स्त्रीहेतोर्विलपेद् वने।।३०।।**

**यदि रामः परं ब्रह्म सर्वज्ञः सर्ववित् प्रभुः।**
**किं न पश्यति सीतां तां हृतां क्व केन किं कृतम्।।३१।।**

**शिवः** : (स्वगतम्) अहो! मोहोऽयं सतीं स्पृष्टः। (प्रकाशम्) देवि! मया तु ससीतः सानुजो रामो दृष्टः। लीलामात्रं तु सीताविरहः।

**सती** : किन्तु मया सीताविरहवेदनापराकाष्ठां प्राप्तः पदे पदे मोहमुपगतो लक्षितः। न तु जनकात्मजा तत्र दृष्टा।

**शिवः** : स एव तु दृष्टिभेदः,

**अनादिशक्तिर्जनकात्मजा सदा**
**न जातु सा दाशरथेः पृथक् सती ।**
**न वीचिरम्भोनिधितो वियुज्यते**
**न वा कला चन्द्रमसो रवेः प्रभा।।३२।।**

**सती** : यद्यपि भवद्वचनाद् युज्यते, तथापि रामवैकल्यं विलोक्य सन्देहदोलाधिरूढं मनः।

**शिवः** : सन्देहस्तु यथार्थदर्शने निवर्तते। न च भवत्या यथार्थं दृष्टम्।

**सती** : कथं पुरतो निरूपयन्त्या मे अयथार्थदर्शित्वमुच्यते?

**शिवः** : यत एवंवादिनी भवती।

**सती** : एवं यदि अनुजानाति भवान् पुनर्गत्वा द्रक्ष्यामि।

**शिवः** : अनुजाने! इहैव तरुतले उपविष्टस्तवागमनं प्रतीक्षे।

**सती** : यथा वदति देवः। तद् गच्छामि। (इति निष्क्रान्ता)

**शिवः** : अहो! मायामाहात्म्यं भगवतो यद् देव्या अपि तत्परमात्मत्वे सन्देहः।

अथवा—

**विलोक्य लीलां नररूपधारिणो**
**विचित्रकल्पां सकलावमोहिनीम् ।**
**न कस्य मोहो भवताद् विपश्यतो**
**विशुद्धधीस्तत् कृपया विमुच्यते।।३३।।**

**न च श्रेयोऽनुपश्यामि प्रियाया गमने पुनः।**
**अथवा रामविधाने हि शुभोदर्कं भविष्यति।।३४।।**

तदिहैव महातरुतले उपविष्य प्रतीक्षे तदागमनम्। मन्ये, सती भगवन्तं सलक्ष्मणं प्राप्तैवेति। (इति उपविशति)

(ततः प्रविशति सलक्ष्मणो रामस्तथैव वैकल्यं नाटयन्)

**रामः** : वत्स लक्ष्मण! अलमन्वेषणेन! बहुशो विचयेनापि नावलोक्यते। न च वनदेवता शंसति ताम्। हा! सीते!

**अहो! नु कष्टं मम नेत्रकौमुदी मनोरथश्रीर्हृदयानुवर्त्तिनी।**
**निपात्य मां शोकदुरन्तसागरे गता हृता वा मृगलोचना कुतः।।३५।।**

**लक्ष्मणः** : उपायेन प्रवर्तितव्यम्, न शोकेन।

**रामः** : (अश्रवणं नाटयन्) अयि! विदेहराजपुत्रि!

**राज्याच्च्युतिश्चीरवनाधिवासो रक्षो महावैरमथापि सर्वम्।**
**सोढं मया नाम सुखं त्वया तु ह्यसह्यशल्यस्तव विप्रयोगः।।३६।।**

(इति मोहं नाटयति)

**लक्ष्मणः** : आर्य! समाश्वसिहि, समाश्वसिहि।

**शोकं न गच्छन्ति भवादृशा ये गृहीतचापाः पुरुषा महान्तः ।**
**अलं विषादेन निपीड्य पादौ वदामि सत्यं श्रय पौरुषञ्च।।३७।।**

**रामः** : (समाश्वस्य अश्रवणं नाटयन्)

**तं देशमद्य नय मामपि वीर वत्स!**
**यत्र प्रिया मम गता हृदयं गृहीत्वा ।**
**नाहं भवानि मिथिलेश्वरराजपुत्रीं**
**पूर्णेन्दुसुन्दरमुखीं क्षणमप्यदृष्ट्वा।।३८।।**

हा! प्रिये! क्वासि! वनस्पते! गिरे! नद्यः! किं युष्माभिः दृष्टा सा? अथवा सर्वत्रैव तु दृश्यते न व्याहरति। प्रिये! (इति मोहं नाटयति)

**लक्ष्मणः** : कथं विषमामवस्थां प्राप्तः। आर्य! आर्य! समाश्वसिहि! शोके अतिस्नेहो व्यसनाय उपकल्पते। अवश्यमेव सीतामधिगमिष्यसि।

**रामः** : (आश्वस्य)

**आलोडितं वनमिदं सगुहाप्रदेशं**
**पृष्टो वनस्पतिरहो बहुशस्तथापि ।**
**सीता विदेहतनया न मया मृगाक्षी**
**लब्धा कथं वदसि लप्स्यत एव वत्स।।३९।।**

**लक्ष्मणः** : पुरुषारम्भस्तु अशक्यकारी तथावक्तुं प्रयोजयति।

**रामः** : सत्यमेवैतत्। न च शोकाहतमनसावदधामि।

**लक्ष्मणः** : धारयात्मानम्। कबन्धनिर्दिष्टः पन्था अनुसर्तव्यः।

**रामः** : धृत एवात्मा। हा सीते! (इति परिक्रामति सानुजः)

(ततः प्रविशति सती सीतावेषधाधरिणी)

**सती** : (प्रविश्य) यद्यपि भगवतो वचने नास्ति विकल्पः, तथापि मम मनो न प्रत्ययं याति। तत् परीक्षणीयं रामः परमेश्वरो नरो वेति। तदर्थमेव मया सीतारूपं धृतमस्ति। विलेक्य धृतसीतारूपां मां नरश्चेद् अवश्यं प्रत्ययं यास्यति, अन्यथा परिचेष्यति। तद गच्छेयम्। (इति समीपमुपसर्पति)

**रामः** : (स्वगतम्) अहो! देवी सती सन्देहमोहग्रस्ता परीक्षणार्थं सीताविग्रहा आगता। (प्रकाशम्) जगज्जननि!· शिवप्रिये! दक्षात्मजे! दाशरथिरहं सानुजो नमामि।

**कथं विहायाम्ब! सुदुर्गमे वने**
**शिवं पतिं ब्रह्म परं भयानके।**
**त्वमेवमेका रमसेऽत्र दक्षजे!**
**क्व वर्ततेऽसौ जगदीश्वरः प्रियः।।४०।।**

**सती** : (लज्जां नाटयन्ती स्वगतम्) कथमेकपदे एव परिज्ञाताऽस्मि। तत्र क्षममिह स्थातुम्।

**रामः** : अम्ब! गच्छ शिवं वयमपि गच्छामः। (इति निष्क्रान्तौ)

**सती** : अहो! आश्चर्यम्! सर्वत्र राममेव सीतया सहितं पश्यामि। रामः परं ब्रह्मैव।

**शिवेन साक्षात् प्रतिबोधिताऽप्यहं**
**विमूढधीर्ब्रह्म गता परीक्षितुम्।**
**परीक्षिता नाम पतिं वदानि किं**
**विषादसिन्धौ नितरां निमज्जिता।।४१।।**

**अनन्त रामं सह सीतया तया**
**विलोकये सर्वजगत् तदागतम् ।**
**भयाकुला नैव शमं लभे क्वचिद्**
**नमामि मायां परमात्मनस्तथा।।४२।।**

तत् शीघ्रमेव शिवं पतिं प्रतीक्षमाणं गच्छामि। (इति सखेदं निष्क्रान्ता)

**शिवः** : कथं चिरायते देवी। अद्यापि नागता।

**सती** : (प्रविश्य) एषा उपस्थिताऽस्मि।

**शिवः** : किमागतैव देवी? अपि प्रेक्षितो रामः? निवृत्तस्ते सन्देहः?

**सती** : (सव्रीडम्) नास्ति भवतां वचने सन्देहः।

**शिवः** : तर्हि किमर्थं गतं त्वया, किं वाचरितम्?

**सती** : (भावं गोपयन्ती) न किञ्चित् कृतम्। केवलं दूरत एव प्रणामः कृतः।

**शिवः** : न हि कश्चिद् विशेषोऽस्ति। पश्यामि। (इति ध्यानं नाटयति)

**सती** : देव! नाहमसत्यं वच्मि।

**शिवः** : (नेत्रे उन्मीलयन् स्वगतम्) अहो! महान् अपराधः कृतो देव्या। पुनरपि मिथ्याभाषणमिति। प्रबलं दैवम्। किमत्र प्रतिकर्त्तव्यं मम एवं परिस्थितौ।

सतीपरित्याग एव कर्त्तव्यः। (प्रकाशम्) अहो! देवि! न युक्तमाचरितम्। न खलु जानकीविग्रहधारिणीं त्वां स्प्रष्टुमुत्सहे।

**सती** : (भयलज्जावैकल्यं नाटयन्ती) नाथ! स्त्रीस्वभावकृतमिति क्षन्तव्यम्, क्षन्तव्यम् (इति पादयोः पतति)।

**शिवः** : (अपसृत्य) देवि! नाहं विमना: क्रुद्धो वा वपुषा त्वां त्यजामि। भागवतीच्छैवेदृशी।

**सती** : हा! हतास्मि। परित्यक्ता सती शिवेन कथं स्थास्यामि?

**पश्चात्तापाग्निदग्धाहं निजकर्मजुगुप्सता।**
**विहाय पतिमीशानं क्व गच्छामि निराश्रया।।४३।।**

**शिवः** : देवि! न शोक: कार्य:। दैवी ह्येषा गति:।

**रामं समायं मम देवि विश्वं**
**यदाश्रितं ते भविताऽचिरं शम् ।**
**विहाय मन्युं भवभक्तियुक्ता**
**कालं प्रतीक्षस्व हितं वदामि।।४४।।**

**सती** : यथाह भगवान्। भवत्सेवापरायणाहं कालं यापयेयम्।

**शिवः** : भवतु तत्,

**रामस्य माया प्रबला न मेया सुरासुराणामपि मोहनीया ।**
**शिवं हि देव्या भविता न कल्पः ह्यमोघदृष्टिः खलु तस्य सिद्धा।।४५।।**

**सती** : अनुगृहीतास्मि।

**शिवः** : देवि! गन्तव्यं तावदिति शिवलोकं प्रतीक्षन्ते तत्र भक्ता:।

**सती** : तथा।

**(इति निष्क्रान्तौ)**

**।। इति श्रीपारसनाथद्विवेदिविरचिते पार्वतीमङ्गले प्रथमोऽङ्कः।।१।।**



## अथ द्वितीयोऽङ्कः

(ततः प्रविशति सगणो नन्दिकेश्वरः)

**नन्दिकेश्वरः** : प्रेषितोऽस्मि अम्बया भगवत्या मन्दारकुसुमानयनाय। देवी प्रियं शिवमर्चितुकामाऽस्ति।

**गणः** : देव! इतः प्रभृति माता सती दुर्मना इव लक्ष्यते।

**नन्दिकेश्वरः** : वत्स! माता सती दुःखिता इदानीमस्ति।

**गणः** : ननु देव्याः को दुःखहेतुः।

**नन्दिकेश्वरः** : भगवतः स्वामिनः शिवस्य तस्यामुदासीनभावः।

**गणः** : कथमकारणकरुणापरायणां दीनानुकम्पिनीम्, अशरणशरणां प्रति प्रभोरीदृशो भावः।

**नन्दिकेश्वरः** : वत्स! अनन्तलीलस्य प्रभोः शङ्करस्य को जानाति चेष्टितम्। न खलु कश्चिदपराधोऽम्बायाः।

**को वेत्तुमीशो जगदीश्वरस्य लीलाविभूतेश्चरितं भवस्य।**
**श्रेयस्तु पश्यामि तदीयवृत्ते शिवेक्षणं नैव हिताद्वियुक्तम्।।१।।**

**गणः** : देव! सत्यमुच्यते।

**लोका नु कम्पाकरमानसायाः प्रभोर्मनोवृत्तिरिव श्रिता कः।**
**तस्यास्तु दोषो जगतां जनन्याः कुतो भवेदीश्वरकल्पितायाः।।२।।**

**नन्दिकेश्वरः** : वत्स! लीलामात्रं भगवतो न खलु तदीयशक्तिः सती उपेक्षिता भवितुमर्हति त्यक्ता वा।

**गणः** : एवमेतद् देव! भवान् तदन्तिकचरः।

**नन्दिकेश्वरः** : वत्स! इदं मन्दारवनम्, चेतव्यानि तर्हि कुसुमानि।

**गणः** : यथा वदति भवान् (इति पुष्पावचयं नाटयतः)

**नन्दिकेश्वरः** : वत्स! महागुणा अम्बातिसरलस्वभावा, यतः —

**उपेक्षिता यद्यपि साधुदर्शिना शिवेन सा भक्तजनानुकम्पिनी।**
**तथापि तस्या न च भावभिन्नता पतिव्रताया हृदयेऽभिलक्ष्यते।।३।।**

**तदन्तिकस्था तदभिन्नभावका तदादिमध्यान्तगतिस्तदीश्वरा ।**
**वरा सती सा पतिदेवता नता विभाति शम्भोरिव मूर्तिरद्वयी।।४।।**

**गणः** : सत्यमेतत्, अम्बा प्रभोश्छायेवानुगता भाति।

**अनन्यभावा पुरतः शिवस्य सदा स्थिता तत् प्रियमाचरन्ती ।**
**प्रभेव सा भाति सुधाकरस्य विभासयन्ती भजतां मनांसि।।५।।**

**नन्दिकेश्वरः** : वत्स! सम्यगुच्यते। भगवानपि भक्तवत्सलः!

**वपुषैव विपिप्रिये प्रियां मनसा नैव हि भक्तवत्सलः।**
**हृदये निहिता चिरन्तनी महतां प्रीतिरमोघबन्धना।।६।।**

**गणः** : अहो! प्रभोर्दयालुता अवाच्यास्ति।

**गुणाधिवासे जगदीश्वरे परे दयालुता सर्वगुणातिशायिनी।**
**अहेतुवृत्ता हि घने पयोधरे सुवृष्टिधारेव जगत्सु जीवनम्।।७।।**

**नन्दिकेश्वरः** : सत्यं भोः!

**ददाति सर्वं स च भक्तवत्सलः प्रियाय भक्ताय विशुद्धचेतसे।**
**स्वयं विरक्तो महितो महेश्वरः परार्थमेवास्ति परिग्रहः सताम्।।८।।**

तद् अवचितानि कुसुमानि। साधयावस्तावत्।

देवी सती अपि सखीसहाया भवन एव विराजत इति तर्कयामि।

**गणः** : तथा। (इति निष्क्रान्तौ)

**(इति विष्कम्भकः)**

(ततः प्रविशति सती सख्या सह दुर्मनाः)

**सती** : (सखेदं) अपराजिते! चिरं निर्व्यूढं मे दुःखम्, न च शाम्यति चेतः।

**हितवचोऽमृतमीश्वरभाषितं न हि मतं तु मया हतभाग्यया।**
**गतवती खलु रामपरीक्षया प्रियतमादपि दूरतरं शिवात्।।९।।**

**अपराजिता** : देवि! न शोकः कर्तव्यः। दयालुः परमेश्वरः।

**सती** : सखि! भारमिव शरीरमनुभवामि।

**वियोगवह्निज्वलितं व्यथाकुलं शिवेन साक्षाद् रहितं विगर्हितम्।**
**न धारये दोषगृहं कलेवरं प्रियं न यत् पत्युरधीश्वरस्य मे।।१०।।**

**अपराजिता** : देवि! शोकं त्यज, न त्वं शिववियुक्तासि।

**अनादिशक्तिः शिवतत्त्वदर्शिनी ह्यमोघवाक् त्वं भुवनस्य नन्दिनी।**
**न शोभते शम्भुरपि त्वया विना तरङ्गमालारहितो यथाम्बुधिः।।११।।**

**सती** : सखि! पश्चात्तापाद् दह्यते हृदयम्।

**परस्य दोषान् सुबहूनपि क्षमे तथानुकम्पे न च मे प्रतिक्रिया।**
**मयैव मोहाद्धृदयन्तुदः कृतः महापराधः सहितुं न शक्यते।।१२।।**

**सखी** : **हृदये तव दक्षनन्दिनि प्रभुशम्भुर्नितरां विराजते।**
**स हि देवि शमं समन्विते कृपया मङ्गलमातनिष्यति।।१३।।**

**सती** : अपराजिते! एवं भगवान् विदध्यात्। दक्षनन्दिनीति वचसा तातः स्मृतिमागतः।

**सखी** : देवि! तव तातेन प्रजापतिना महान् मख आरब्धः।

**सती** : महान् हर्षः। सखि! किं नु तातभवने कतिचिद् दिनानि शोकमयानि गत्वा यापयेयम्।

**सखी** : एवमेतत्। देवि! शोभनमुक्तम्। मन्ये भगवानपि गमिष्यत्येव तत्र।

**सती** : आम्! अवश्यमेव तातेन निमन्त्रिता भगवन्तो भवेयुः। तद् गत्वा भगवतोऽभिजाने।

**सखी** : एवमेतत्।

**सती** : चिराद् गतो नन्दिकेश्वरोऽद्यापि नागच्छति।

**नन्दिकेश्वरः** : (प्रविश्य) एष समागतोऽहं दासः। इमानि कुसुमानि।

**सती** : प्रियं मे कृतम्। वत्स चिरं जीव! गच्छ स्वनियोगमशून्यं कुरु।

**नन्दिकेश्वरः** : यथाह देवी! नमस्ते। (इति निष्क्रान्तः)

**सती** : अपराजिते! मन्ये भगवानपि एकान्ते सुखोपविष्टो भविष्यति। तदधुनैवार्चितुं याचितुञ्च वाञ्छामि। तत् साधयावस्तावत्।

**सखी** : यथा वदति भवती। (इत्युभे परिक्रामतः)

(ततः प्रविशति यथोक्तः शिवः)

**शिवः** : **मिथ्याप्रपञ्चं सुविदो वदन्ति ब्रह्मैव नित्यं चिदहं तथा च।**
**न मेऽस्ति कामस्तदपि प्रसह्य सतीवियोगस्तु मनो निहन्ति।।१४।।**

कथं प्रत्याख्याता प्रिया सती वर्तयतीति सीदति मनः। अथवा रामः श्रेयो विधास्यति।

**मायामयं जगदिदं प्रतिभासमात्रं**
**भिन्नं विभाति विभुतः सुविदां परं तत् ।**
**सत्यं वदन्ति बहवोऽल्पधियो विमूढा**
**जानन्ति ते श्रुतिरहस्यरसं न सम्यक्।।१५।।**

सती अपि कथमद्य चिरायते।

**सती** : (प्रविश्य) देव! प्रणमति एषा मन्दभागिनी।

**शिवः** : देवि! मैवं वक्तव्यम्। न हि शिवसङ्गतं मन्दमिति साम्प्रतम्।

**सती** : सुधाकल्पेन वचसानेनाभिषिक्तं मे चेतः।

**शिवः** : प्रिये!

**आदाय देवि! जगतां समवायिनीं त्वां**
**सर्वं दधामि विपरीतविवर्तितञ्च ।**
**भक्ताभयार्थमसकृद् वितनोमि लीलां**
**कुत्रासि मद्विरहिता प्रकृतिः परार्था ।।१६।।**

**सती** : नाथ! न भवादृशो दयालुः।

**कलाधरोदारसदम्बुवाहस्त्रिशूलहस्तोषितसर्वभक्तः ।**
**विभूतिभूषो विषमाक्षनाथः पपौ विषं विश्वमतुल्यरूपः ।।१७।।**

**शिवः** : (सस्मितम्) सम्यगुपालब्धोऽस्मि देव्याः। दारसदम्बुवाह इति।

**सती** : देव! नायमुपालम्भः। कलाधरोदारः कृपया पूजां गृहाण (इति पुष्पाञ्जलिमर्पयति)

**शिवः** : परितुष्टोऽस्मि! किं ते प्रियं करवाणि।

**सती** : भवच्छरणागता भवेयम्।

**प्रियं न किञ्चिद् भवदन्यदेतद् वदामि सत्यं निखिलार्थविज्ञ।**
**त्वय्येव नाथे रतिरस्तु नित्यमिष्टो वरस्त्वं भव मे दयालुः ।।१८।।**

**शिवः** : तथास्तु, प्रतिजाने।

सती : अनुगृहीतास्मि। (नेपथ्ये ध्वनिमभिनीय) देव! किमिदं श्रूयते।

शिवः : तव पितुर्दक्षस्य मखोत्सवे मखभागभाजां देवानां विहायसा गच्छतां विमानध्वनिः।

सती : (स्मृतिमभिनीय) (सहर्षम्) नाथ! अहमपि तत्र गन्तुमिच्छामि।

**अमूनि वाञ्छामि दिनानि सोत्सवे पितुर्गृहे यापयितुं यदीच्छसि ।**
**अलोकितैरिष्टजनैश्च बन्धुभिश्चिराज्जनन्या सह सङ्गता सुखम्।।१९।।**

शिवः : किम् अनाहूता गन्तुमिच्छसि।

सती : किं महादेवो भवान् नाहूतः।

शिवः : दक्षः खलु मया सह कृतवैरः कथमाह्वयेत्।

सती : कथं तातः सापकारो भगवति।

शिवः : देवि! पुरा ब्रह्मसभायामुपस्थितोऽसौ उपविष्टं मामवलोक्य नाभ्युत्थानमनेन कृतमिति द्रुह्यति।

**समेऽपि मे चेतसि शान्तभावे दक्षोऽन्यथा पश्यति दुष्टबुद्धिः ।**
**मदात्तवैरो मदमानकर्ता वक्रं प्रयातीव जले जलूकाः ।।२०।।**

सती : अन्यथाख्यातिरस्ति तातस्य भगवति।

शिवः : अत एव त्वया न तत्र गन्तव्यम्।

**न क्षणं तत्र गन्तव्यमात्मनो हितमिच्छता ।**
**आहूतेनापि वैरित्वे गुरुमित्रगृहेष्वपि ।।२१।।**

सती : समर्थे सति भवति नास्ति भयम्।

शिवः : न च तव गमने तत्र श्रेयः पश्यामि।

सती : भृशं बन्धुषु चित्तमनुबद्धं बाधते माम्।

शिवः : देवि! शिवं पश्य। पुनरपि मोहो न स्पृशेत्।

सती : भगवति प्रकाशमाने सति कुतो मोहतमः। इदमेकं प्रियं भवता क्रियमाणं प्रार्थये।

शिवः : (स्वगतम्) भवितव्यं भवत्येव। अबन्धुषु बन्धुत्वमतिमोहोऽनर्थकारी। भवतु का गतिः। (प्रकाशम्) देवि! प्रबला तेऽभिलाषा।

सती : एवमेतत्। देव! अनुजानीहि माम्।

शिवः : कथं भवतीमवरोद्धुं शक्नुयाम्। तद् गच्छ श्रेयस्ते भूयात्। (नेपथ्याभिमुखम्) कः कोऽत्र भोः।

नन्दिकेश्वरः : (प्रविश्य) अयमहमस्मि। को नियोगोऽनुष्ठीयताम्।

शिवः : वत्स! नन्दिकेश्वर! गणैः सह देवीं सत्वरं यथासुखं प्रापय दक्षमखोत्सवे! तत्रभवती गन्तुमिच्छति।

नन्दिकेश्वरः : यथाज्ञापयति देवः।

शिवः : देवि! सज्जीभव। अयं वत्सोऽनुचरो बलैः सह त्वां यथासुखं प्रापयिष्यति।

सती : यथाज्ञापयति भगवन्। एषा गच्छामि। अचिरादेव त्वामागत्याश्रयिष्ये।

शिवः : तथास्तु।

सती : अनुगृहीताऽस्मि। (इति निष्क्रान्ता)

शिवः : वत्स! नन्दिकेश्वर! त्वया सावहितेन भवितव्यम्। मम वैरी खलु दक्षः। कदाचित् सत्यपमानं न कुर्यात्। तद् गच्छ नय देवीम्।

नन्दिकेश्वरः : यथाज्ञापयति भगवान्। (इति निष्क्रान्तः)

शिवः : (दुर्निमित्तमभिनीय) अहो! दुर्निमित्तानि प्रादुर्भवन्ति। न देव्याः कल्याणं पश्यामि।

**हठात् हि सा मोहमुपागता पुरा**
**निषेधिता सत्यपि शम्भुना मया ।**
**तथाद्य यान्त्याः सदनं सुवैरिणः**
**शिवं न पश्यामि मनो विशङ्कते ।।२२।।**

तद् गन्तव्यमितः।

**(इति निष्क्रान्तः)**

**।। इति श्रीपारसनाथद्विवेदिविरचिते पार्वतीमङ्गले द्वितीयोऽङ्कः ।।२।।**

●

## अथ तृतीयोऽङ्कः

(ततः प्रविशति सचिन्तः शिवः)

**शिवः** : अहो! दैवं विपरीतं पश्यामि। अपि स्वस्ति देव्यै।

**प्रवाति वायुर्न सुखावहो रविः प्रकाशतेऽल्पं विगतप्रभो दिशः ।**
**वृता महारेणुचयैश्च लोचनं स्फुटं स्फुरत् सव्यमनिष्टमिङ्गति ।।१।।**

न जाने प्रियायाः सत्याः का दशा। (इति चिन्तां नाटयति)

(ततः प्रतिशति सहसा नन्दिकेश्वरः)

**नन्दिकेश्वरः** : देव! देव! (सोद्वेगम्)

**शिवः** : (सोद्वेगम्) किमिति वत्स! अपि कुशलं देव्याः?

**नन्दिकेश्वरः** : अप्रियम्, अप्रियम्, देव्याः।

**शिवः** : अपि धारयत्यात्मानं देवी।

**नन्दिकेश्वरः** : न हि।

**शिवः** : हा हतोऽस्मि।

**उपस्थितो यः प्रथमो विशङ्कितः सतीविनाशोऽशनिदारुणो मम ।**
**हता प्रिया घोरतरं वचो विषं न शक्नुवे सोढुमहं कथञ्चन ।।२।।**

वत्स! कथय, कथय, किं वृत्तम्?

**नन्दिकेश्वरः** : (सखेदम्) नाथ! अस्माभिः सुरक्षिता पितृगृहं प्राप्ता सबन्धुदक्षेन नाभिनन्दिताऽपमानिता च।

**शिवः** : प्रथममेव मया प्रतिषिद्धाऽऽसीत्। ततस्ततः?

**नन्दिकेश्वरः** : ततो मखमण्डपे क्वचिदपि भवतो भागं न दृष्टवती।

**शिवः** : ततस्ततः?

**नन्दिकेश्वरः** : ततो भगवतोऽपमानमसहमाना सक्रोधमुवाच—

**धिगस्तु दक्षं सपुरोधसो मतान् सुराँश्च सर्वान् शिवतत्त्ववर्जितान् ।**
**भविष्यति ध्वंसनमीदृशस्य वः शिवद्रुहां वच्मि मखस्य नान्यथा ।।३।।**

**पिता न माता न सखी न बान्धवः**
**न कोऽपि सत्योऽस्ति महेश्वरादृते**
**नमामि कैलासपतिं शिवं पुनः**
**पुनर्न मोहः समुपागतो भवेत्।।४।।**

**शिवः** : हा! देवि! ततस्ततः?

**नन्दिकेश्वरः** : ततो भवन्तं मनसा स्मरन्ती प्राह—

**अनुग्रहस्तस्य भवेज्जगत्पतेः**
**कृपाधिनाथस्य भृशं नमाम्यहम् ।**
**कदापि जायेत न विच्युतिः प्रभो,**
**दृढोऽनुरागोऽस्तु पदाब्जरेणुषु ।।५।।**

**शिवः** : हा देवि! अनाथा त्वं विनष्टा। ततः?

**नन्दिकेश्वरः** : तदनन्तरं प्रभो! देवी सामर्षमवोचत्—

**इदं शरीरं खलदक्षदेहजम् अनर्थबीजं गिरिशावधीरितम् ।**
**प्रदह्यमानं मलिनं दुरम्बरं मुहूर्तमप्यत्र न धर्तुमुत्सहे ।।६।।**

**शिवः** : (सोद्वेगम्) ततः किमकरोत् सा।

**नन्दिकेश्वरः** : देव! ततः (सखेदम्)—

**इतीदृशं प्रोच्य भवद्विमाननाद् रुषा दहन्तीव सभासदो भृशम् ।**
**शिवं वदन्ती खलदक्षसम्भवां ददाह योगोद्भववह्निना तनुम्।।७।।**

**शिवः** : हा! हा! देवि! ईदृशस्ते विपाकः।

**नन्दिकेश्वरः** : ततो देव! दिव्यज्योतिःस्वरूपा सती अन्तर्हिता।

**शिवः** : कष्टं भोः! (सक्रोधम्) अरे रे दक्षाधम!

**पिनाकपाणिर्न च शूलहस्तः रुद्रोऽन्धकारिस्त्रिपुरान्तकश्च ।**
**त्रिलोचनो वा गणितः खलेन त्वयात्महन् कालपशो मदेन ।।८।।**

**नन्दिकेश्वरः** : ततोऽहं क्रुद्धो गणैः सह दक्षमखं नाशयितुमारब्धवान्।

**शिवः** : ततः?

**नन्दिकेश्वरः** : ततो पुरोधसा मन्त्रबलेनोत्पादिता महासैनिकाः। तैः सह कृतसंग्रामो भगवन्तं निवेदयितुमागतः। तदत्र भगवान् प्रमाणम्।

**शिवः** : (सक्रोधम्) आः पाप अचिरादेव,

**सुरसहितसमग्रं सैन्यमेतत् प्रसह्य**
**मम रिपुवनवह्निस्तीव्रवेगं त्रिशूलम्।**
**अधम तव शिरोऽशच्छेदरक्तोत्पिपासु-**
**र्ह्यशिवमखममोघं नाशयत्येव शीघ्रम्।।९।।**

**नन्दिकेश्वरः** : (सक्रोधम्) देव! सद्य एवादिश्यन्तां प्रमथगणाः। वयं क्षणान्तरं गत्वा दक्षं सपुरोधसं हन्मः।

**शिवः** : एवमेतत्। (इति ध्यानं नाटयति)

**वीरभद्रः** : (सहसा प्रविश्य सक्रोधम्) नाथ! को नियोगो विधातव्यः? किमर्थमुत्पादितोऽहम्?

**पीतं केन हलाहलं जगति को वध्यो ममास्ति प्रभो!**
**को दग्धुं खलु वाञ्छति प्रदहति क्रोधान्तकालानले।**
**कं शूलं शतवज्रकोटिसदृशं प्रोद्दण्डवैवस्वतं**
**ओषेत् किं द्रुहिणस्य सुप्तिसमयः प्राप्तोऽधुनैवास्ति सः।।१०।।**

**नन्दिकेश्वरः** : (सविस्मयम्) अये! कोऽयम्?

**महाद्रिकायः कुपितोऽन्तको यथा**
**त्रिशूलचापासिधरैः करैर्नभः।**
**स्पृशत्यदम्याप्तबलः प्रकाशते**
**सुरासुराणामपि नाशनक्षमः।।११।।**
**महौजसा रूपगुणेन तुल्यो**
**रुद्रेण कोपात् स्फुरदोष्ठनासः।**
**अभूतपूर्वो ज्वलयत्यशेषं**
**जगज्जिघत्सुः प्रलयानलोऽयम्।।१२।।**

**शिवः** : वत्स! वीरभद्र! मनसा त्वं जातोऽसि प्रियोऽसि विजयी भव।

**वीरभद्रः** : अनुगृहीतोऽस्मि।

**शिवः** : **दक्षं विनाशय खलं पतितं सबन्धुं**
**यज्ञञ्च मोहमयमीश्वरवर्जितं तत् ।**
**सैन्यं विदारय रिपोरमितप्रभाव!**
**वीराग्रगण्य! विजयी भव वीरभद्र!।।१३।।**

**वीरभद्रः** : **कोपानले मम समस्तजगज्जिघत्सो-**
**र्दक्षः प्रभो! किमिव नाम भवेत्पतङ्गः ।**
**प्राणान् प्रियान् धरतु दुष्टपशुस्तु ताव-**
**द्यावन्न निःसरति ते वदनाद् व्रजेति ।।१४।।**

**शिवः** : परितुष्टोऽस्मि। तत्,
**अमोघमुग्रं शतसूर्यतेजोऽनिवार्यवेगं रिपुवंशवह्निम्।**
**गृहाण शूलं मम शूलजातं सुरासुरादीन् विजयस्व तेन।।१५।।**
(इति शूलं समर्पयति)

**वीरभद्रः** : (गृहीत्वा) अनुगृहीतोऽस्मि।

**शिवः** : प्रयाहि वत्स! विजयस्व, विजयस्व।

**वीरभद्रः** : **निहन्मि दक्षं सबलं शिवद्विषं**
**न कोऽपि तस्यास्ति खलस्य रक्षिता ।**
**स्वयं सुरेशो वरुणो धनाधिपः**
**प्रजापतिर्वा युधि मे भविष्यति।।१६।।**

(इति विकटं परिक्रामति)

**पश्यन्त्यद्य पराक्रमं युधि सुरा ये केऽपि वीराः स्थिता**
**भित्त्वा भूमिमथापि विश्वमखिलं दक्षं निहन्मि क्षणम् ।**
**सद्यः शोकप्रतिक्रियास्तु भवतां देव्या वियुक्तात्मनां**
**गच्छामि त्वरितं प्रभो रिपुवनं दग्धं विजानन्तु तत् ।।१७।।**
(इति निष्क्रान्तः)

**शिवः** : वत्स! नन्दिकेश्वर! त्वमिहैव ममान्तिकचरो भव। दक्षं सबलं हतमेवावेहि।

**नन्दिकेश्वरः** : यदाज्ञापयति देवः।

**हतो हि यः शम्भुपदाद् वियुक्तो मोहग्रहो वित्तकलत्रलिप्तः।**
**दक्षः खलः पापमयो दुरात्मा नष्टो निमित्तं त्विह वीरभद्रः।।१८।।**

**शिवः** : सगणो महाकाल इव वीरभद्रः प्रयाति।

**नन्दिकेश्वरः** : देव! शीघ्रमेव ससैन्यं समखो दक्षो हत इति सुवृत्तं श्रोष्यामः।

**शिवः** : वत्स!

**पूर्णात्मनो न रिपुरस्ति न च प्रियो मे**
**वाञ्छामि सर्वजगतां हितमेव नित्यम्।**
**शक्तिः सती न पृथगस्ति न धक्ष्यते सा**
**दक्षस्तु दुष्टहृदयः खलु दण्डनीयः।।१९।।**

**नन्दिकेश्वरः** : देव! एवमेतत्—

**कोपानले सर्वजगज्जिघत्सोस्तद्वीरभद्रस्य भयङ्करस्य।**
**त्रिशूलहस्तस्य महाबलस्य दक्षो न चैकाहुतिरल्पभागः।।२०।।**

**शिवः** : **तृतीयनेत्रोत्थयुगान्तवह्निना समस्त्रिशूलाग्रहतारिकष्टकः।**
**मम प्रियः कोटिरविप्रभाकरो निहत्य दक्षं सबलं स एष्यति।।२१।।**

**नन्दिकेश्वरः** : भगवन् सर्वज्ञ! वीरभद्रकृतदक्षयज्ञविध्वंसदर्शनकौतुकं मेऽस्ति।

**शिवः** : वत्स! पश्य दर्शयामि तावत्। (इति हस्तोद्यमनं नाटयति, पृष्ठ-जवनिकान्तरे यज्ञदृश्यं वर्तते)

**शिवः** : पश्य पश्य महावीरवीरभद्रचेष्टितम्।

**युद्धोन्मत्तमहास्त्रपाणिभिरयं मुख्यैर्गणैरुच्छ्रितै**
**र्दृप्तैः प्रेतपिशाचसङ्घबहुलैरुत्साहशक्तैर्युतः।**
**प्राप्तो दक्षमखस्थलीं बहुविधैर्गर्जन् गृहीतायुध-**
**स्तेजः क्रोधभयङ्करः प्रतिमुखं वीरः कृतान्तोऽपरः।।२२।।**

**नन्दिकेश्वरः** : देव!

**त्रिशूलमुद्यम्य विलोडयन् स-**
**नभः सतारार्कमखण्डशक्तिः।**
**कल्पान्तकारी भवदक्षिजन्मा**
**भातीव संहारकरः प्रकोपः।।२३।।**

अहो! आश्चर्यम्! आश्चर्यम्! अयं दक्षः सपुरोधाः।

(ततः प्रविशति दक्षः सपुरोधाः)

दक्षः : (पुरोहितमवलोक्य) गुरो! कपालिना सह महान् विग्रह आरब्धः। तत् प्रतिकारोपायश्चिन्तनीयः।

भृगुः : महाराज! मा भैषीः!

**सर्वे भूतपिशाचगुह्यकगणाः कपालमालाधरा**
**व्यर्थाडम्बरभीतिदाः श्रुतिपथाद् भ्रष्टाः प्रमत्ताधमाः।**
**मच्छक्तिप्रभवैर्महाभटबलैर्वेदोक्तमन्त्रोद्गतैः**
**प्रोद्दीप्तैरनलैर्भृशं शलभतां सद्यो लभन्तां परे।।२४।।**

दक्षः : **गुरौ महामन्त्रविदांवरे त्वयि बराकसैन्यं नु दिगम्बरस्य तत्।**
**हतं मया वीतभयेन मन्यते महत्सु तेजोऽर्थकरं न साधनम्।।२५।।**

भृगुः : (मखप्रयोगं नाटयति)

दक्षः : अतीवभयङ्करोत्पाता दृश्यन्ते। वामाक्षिस्फुरणं नामानिष्टं सूचयति।

भृगुः : मयि सति नोपद्रवसम्पातः।

दक्षः : **वृतं नभोरेणुमहारवैर्घनैर्भयाद् द्रुता मे पुररक्षिणो दिशः।**
**महायुधैरध्वनि भैरवध्वनिः प्रवर्तते तद्रिपुचेष्टितं ध्रुवम् ।।२६।।**

भृगुः : (अवलोक्य) तर्हि सावहितैरस्माभिर्भवितव्यम्। इमे सुरा अपि ते साहाय्यं विधास्यन्ति।

दक्षः : (सभयं) ननु समागत एवासौ पशुपतिः कपाली सभूतः।

(ततः सहसा सक्रोधं वीरभद्रो गणैः सह प्रविशति)

वीरभद्रः : (सक्रोधम्)

**अलं सैन्यैः सर्वैः प्रमथबहुलैः सङ्गरमुखे**
**सतीदेव्या दाहप्रतिकृतिकरं शत्रुकदनम् ।**
**शिवद्रोहादेकं शतपविसमस्पर्शमधुना**
**सुपर्याप्तं दक्षाचलशिरसि शूलं पततु मे।।२७।।**

(इति शूलोद्यमनं नाटयति) अरे दक्षाधम! मुहूर्तं तिष्ठ।

दक्षः : अरे! रे! भिक्षुकानुचर! अतीव प्रगल्भसे।

गलाच्छिरस्तालफलोपमं तव निपातयामि क्षणमद्य दुर्मुख! ।
महासिना कालकरालकर्मणा करोमि सद्यस्तु सतीपथातिथिम् ।।२८।।

वीरभद्रः : (प्रहस्य) अरे दुष्ट!

स्थितो महाशैल इवापरस्त्वया प्रदर्श्यतां तद् बलमात्मनो यथा।
शिवापमानं च सतीविनाशनं कृतं तु येनाद्य गतायुषाधम! ।।२९।।

दक्षः : गुरो! सर्वज्ञ! सर्वशक्ते! सर्वे समागताः सुराश्च समेत्य शिवसैन्यं प्रहरन्तु।

भृगुः : (आहुतिं गृहीत्वा) अरे! आत्माभिमामिन् दुष्ट! मुहूर्तं तिष्ठ!

आविर्भवन्तु सुभटा विजया महान्तो
दिव्यायुधाः शिवगणान् प्रतियोद्धुकामाः ।
भूयो जुहोमि सुविशुद्धपदैश्च मन्त्रै-
र्लीयेत सत्वरमिदं रिपुसैन्यजातम्।।३०।।

(इति आहुतिप्रदानं नाटयति। अन्यगणाः पादेनान्यत्र प्रक्षिपन्ति।)

वीरभद्रः : (सहसा दक्षं केशेषु गृहीत्वा)

अहमिह रिपुमुण्डं रक्तसक्तं सकेशं
सुचिरतृषितशूलच्छिन्नमेतत् कलङ्कम् ।
ज्वलितहुतवहेऽस्मिन् पूरयाम्यद्य दत्त्वा
शिवरहितमखानामाहुतिं पश्चिमां तु।।३१।।

(इति तथा करोति, अन्ये गणा यज्ञभाण्डानि विक्षिपन्ति, कुण्डे जलं पातयन्ति, अन्यान् ताडयन्ति।)

वीरभद्रः : (भृगुमवलोक्य) इदानीं ते दक्षिणाऽवशिष्टा ।

समाप्तयज्ञस्य पुरोहितस्य सुदक्षिणा मन्त्रविदोऽवशिष्टा।
गृहाण चैतन्न हि लब्धपूर्वं परिश्रमो नाम कृतस्त्वया तु।।३२।।

(इति भृगोः श्मश्रूत्पाटनं करोति)

वीरभद्रः : अरे! शिवगणाः! पश्यत! पश्यत!

मच्छूलपातभयभग्नपराक्रमास्ते
दाक्षा द्रवन्ति विदिशः समरे प्रवीराः ।
दक्षं विगर्ह्य गिरिशं बहुशः स्तुवन्तो
देवा व्रजन्ति विधिलोकममुं विभीताः।।३३।।

तन्न युक्तं पलायमानान् अनुक्रमितुम्। तत् स्वामिनं साधयावो विजयं सूचयितुम्। (इति निष्क्रान्ताः सर्वे)

**शिवः** : वत्स! नन्दिकेश्वर! अपि दृष्टं त्वया?

**नन्दिकेश्वरः** : नाथ! सर्वमवलोकितम्। महान् विजयोऽस्माकं वीरभद्रेण भद्रेण कृतः।

**शिवः** : प्रतिशोधित आधिः। वीरभद्रोऽपि आगच्छत्येव।

**वीरभद्रः** : (प्रविश्य, सोत्साहम्) विजयतां विजयतां देव! हतो दक्षो विनाशितो मखः। विद्राविताः सुराः। त्यज्यतां मन्युः।

**शिवः** : वत्स! प्रियं कृतम्। तद् वरं ददामि ते।

**प्रियं कृतं वीर ममाद्य पुत्रक! ततो गणानां प्रथमो भविष्यसि।**
**प्रियोऽसि सर्वेष्टवरप्रदो भव सुपार्श्वनिष्ठोऽन्तिकचारणः परः।।३४।।**

**वीरभद्रः** : अनुगृहीतोऽस्मि।

**शिवः** : तद् गच्छ! सुखं वस। वत्स! नन्दिकेश्वर! त्वमपि गच्छ। स्वकृत्यं निष्पादय। (इति उभौ निष्क्रान्तौ)

**शिवः** : (स्मृतिमभिनीय) सतीदेव्यै वरो दत्तो न कदापि मद्वियुक्ता सा भवेत्। तत्पुनस्तां ग्रहीष्ये।

**अनादिशक्तिः खलदक्षदेहजां तनुं परित्यज्य जगत् सुमङ्गलम्।**
**विधातुकामा तपसा समेष्यति परां पुनर्हैमवतीं पतिञ्च माम्।।३५।।**

भवतु! अहमपि समाधिमाश्रये। (इति निष्क्रान्तः)

**।। इति श्रीपारसनाथद्विवेदिविरचिते पार्वतीमङ्गले तृतीयोऽङ्कः।।३।।**



## अथ चतुर्थोऽङ्कः

(ततः प्रविशतः शृङ्गिभृङ्गिणौ)

शृङ्गी : (परितो विलोक्य मुखविकारं नाटयन्) अयि भोः! बुभुक्षितोऽस्मि। शनैः शनैरपचयमेति मे शरीरम्।

भृङ्गी : भोः! अधुनैव मणद्वयं लड्डुकं भक्षयित्वाऽऽगतः, तदापि ते बुभुक्षा न शान्ता।

शृङ्गी : कथं परिहससि! पश्य मे प्रतिक्षणं क्षीयमाणं शरीरम्।

भृङ्गी : अयि! अतिस्थूलस्तुन्दिलो दृश्यसे। कथमस्मादपि स्थूलतरो भवितुमिच्छसि? कथं नाम पृथिवी त्वां धारयिष्यति?

शृङ्गी : वत्स! मातापितृभ्यां लालितो रक्षितश्च वत्सो वर्धते।

भृङ्गी : किं वत्सोऽसि, तर्हि वृद्धो कीदृशो भविष्यति?

शृङ्गी : अलं परिहासेन! माता सती पिता शिवः। उभावपि त्वां मां च सर्वं गणसमुदायं विहाय गतौ। तत् कथमस्माकं पोषणं भविष्यति।

भृङ्गी : (सखेदम्) सखे! ममापि ताभ्यां विनाऽहर्निशं व्यथते चेतः। केवलं दुःखन्यूनीकरणाय परिहासः कृतः।

शृङ्गी : सखे! जानास्येव जनन्याः सतीदेव्या यथावृत्तम्।

भृङ्गी : एवमवगतवृत्तान्तोऽस्मि।

शृङ्गी : सखे! माता सती अस्माकं प्रत्यहं भोजनादिचिन्तां कृतवती आसीत्, येन सुखं दिवसा यापिताः।

भृङ्गी : (साश्रु) अपि सत्यम्।

**माता सा मे सत्स्वभावान्नपूर्णा**
**भाण्डागाराद् मोदकानि प्रगृह्य ।**
**स्वेच्छं नित्यं खादतोऽस्मद्दृशाँश्च**
**वात्सल्यान्न प्रावदन्मोदमाना ।।१।।**

शृङ्गी : अहो! जननीं विना अनाथाः स्मः।

**अचिन्तयन्ती बहुशोऽपराधान् मुहुर्मुहुः पृष्टवती च भुक्तम् ।**
**न वेति या पालनतत्परा सा दयालुरम्बा मम कुत्र याता ।।२।।**

भृङ्गी : सखे! स्वामी अपि न जाने अस्मान् अनाथीकृत्य कुत्र गतः। शून्यः कैलासः।

शृङ्गी : अयि! न जानासि, यदा वीरभद्रः समखं दक्षं विनाश्य आगतस्तदैव भगवान् भूतभावनः,

**ततः प्रसन्नो विहतारिकण्टकः समाहितात्मा जगतामधीश्वरः ।**
**शिवो विशुद्धप्रणतार्तिनाशनो हिमालयस्योर्ध्वशिखां जगाम ह ।।३ ।।**

भृङ्गी : ततः किम्?

शृङ्गी : तत्र ब्रह्मपुरोगैर्देवैर्दक्षार्थं मखपूरणार्थञ्च संस्तुतः प्रसन्नः सन् दक्षं जीवयन् मखं सफलं कारयामास।

भृङ्गी : अहो!

**अम्बेव सोऽपि स्वयमाशुतोषो दयालुरन्तःसरलस्वभावः ।**
**क्षमाधिनाथो भजदार्त्तिहारी न तत्समः कश्चिदिहोपपन्नः ।।४ ।।**

शृङ्गी : **दक्षो नतः शिवपदं तमकामदेवं**
**तुष्टाव दिव्यवचनैर्मधुरैः प्रबुद्धः ।**
**देवैः सहैव निजदोषनिरासकामः**
**प्रीतोऽग्रहीत् परमकारुणिकस्ततस्तम् ।।५ ।।**

तदनन्तरं देवो देव्या विप्रयोगाच्छोकाकुलो न सुखमवाप।

भृङ्गी : कष्टं भो! देवस्यापि एवं दशा।

शृङ्गी : अयि भोः! न भ्रमः कार्यः। लीला भगवतः।

भृङ्गी : एवमेव सखे! न भ्रान्तोऽस्मि। देवदुःखदुःखिना मया उक्तम्। ततः?

शृङ्गी : **प्रियवियोगजशोकमनाः शिवो**
**विधिकृतेषु भवेषु परिभ्रमन् ।**
**हिमगिरिं गिरिराजमुपेयिवान्**
**धवलितं वलितं तुहिनैर्घनैः ।।६ ।।**

**वटतरोस्तलमुन्नतमीश्वरः सममवेक्ष्य समाप्तसमक्रियः।**
**सुखदमात्ममहिम्नि सदा स्थित उपविवेश विवेषविभूतिमान्।।७।।**

**भृङ्गी** : समर्थः खलु देवः। ततः?

**शृङ्गी** : **सहजयोगसमाधिमधीश्वरः सकलमायिकभावपरात् परः।**
**प्रणतभक्तजनार्थविशेषवान् उपगतोऽपगतोपनिबन्धनः।।८।।**

**भृङ्गी** : शून्यमिदानीं जगद् विभाति। वयं दीना निराश्रया मातापितृभ्यां विना विजने वने भ्राम्यामस्त्रस्ताः।

**शृङ्गी** : (नेपथ्ये कर्णं दत्त्वा) अये इतो मधुरो ध्वनिः श्रूयते।

**भृङ्गी** : (सभयं) अये कस्य ध्वनिः? भीतोऽस्मि।

**शृङ्गी** : मूर्ख! किमिदं भयस्थानं? मा तावत्। निरूपयामि कस्यैष इति।

**भृङ्गी** : (तत् पृष्ठे गत्वा) निरूपय तावत् शीघ्रम्। हा! पितरौ विना भयभीतोऽस्मि अनाथोऽस्मि।

**शृङ्गी** : (निरूप्य) अलं भयेन! वीणाध्वनिः। मन्ये, देवर्षिर्नारदः प्रतिभाति। तद् हर्ष एवास्माकम्।

**भृङ्गी** : किमत्र कर्त्तव्यम्?

**शृङ्गी** : सखे! इहैव कुञ्जान्तर्हितो भवेव। निरूपणीयं तावत् किमिति।

(इति तथा कुरुतः)

(ततः प्रविशति यथोक्तो नारदः)

**नारदः** : (गायन् प्रविश्य)

लीलां तनुते भव तव माया।
नारायण जगदीश्वर शङ्कर सुन्दरश्यामलकाया।। (ली.)
रचयति विविधविचित्रविधानम्, भ्रमयति चेतोबोधपिधानम्।
मुनिजनमोहकरी शतवेषा नृत्यति गायति नियतिरशेषा।
सुरपतिहृदयनिकाया ।। (ली.)

भक्तजनार्त्तिहरी हरिचेतसि मोदकरी कृपया या ।
मूढजनोरसि भीतिकरी जगदुद्भवपालननाशक्षमा या
मिथ्या सत्यवदाभा ।। (ली.)

देवराजप्रियचिकीर्षया वसुन्धरां प्रयातुकामोऽहम्। अयमस्ति भगवतः शङ्करस्य कैलासलोकः। अस्ति च मम अभिलाषः शिवसतीपदसरोजाङ्कितं पूतस्थलमिदं पश्यामीति। अतोऽत्रागमनम्।

जगदम्बा सती तु,

**स्थूलां तनुं मलिनवासमिवावमानाद्**
**उत्सृज्य योगहुतभुग्ज्वलितां शिवार्थम् ।**
**रूपं परं सकलकल्मषहं विधाय**
**जाता हिमाचलकुले जगतां हिताय।।९।।**

तद् भगवत्या हिमालयराजसुताया अभिनवं दर्शनं वाञ्छमीत्यस्ति ममाप्याग्रहः।

**तारकासुरविभीतिकम्पितो देवतापतिरिहेच्छतीदृशम् ।**
**सर्वलोकशिवमस्ति जन्मतः शाश्वती हि शिवशक्तिरिष्टदा।।१०।।**

तत् प्रणम्य शिवलोकं प्रयामि हिमालयराजभवनम्।

(इति तथा कुर्वन् निष्क्रान्तः)

**शृङ्गी** : (सहर्षम्) सखे! महान् हर्षः। अपि श्रुतवानसि?

**भृङ्गी** : (सहर्षम्) जगदम्बा माता आविर्भूता। अहो जीविता वयम्।

**यथा शुष्यत्सु तरुषु वृष्टिर्जाता तथा श्रुतिः ।**
**जाता माता पुनरिति मादृशे जीवितप्रदा।।११।।**

**शृङ्गी** : तत् सखे! अद्यैवावामपि अन्तर्हितौ भूत्वा गत्वा तत्र पश्यावस्तावद् देवीं मातरं नारदहिमगिरिसंवादञ्च शृणुवः। नारदोऽपि योगी प्राप्त एव तद्भवनम्।

**भृङ्गी** : तथा। (इति निष्क्रान्तौ)

**(इति विष्कम्भकः)**

(ततः प्रविशन्ति हिमगिरी राज्ञी नारदश्चेति)

**नारदः** : अचलराज! अपि कुशली भवान् सपरिवारः।

**राज्येषु कोशेषु बलेषु वृद्धिः प्रजासु कच्चित्तव मित्रवर्गे ।**
**अनामयं तात हिमाद्रिराज! धर्मेषु सर्वत्र च सन्ततेषु ।।१२।।**

**हिमाचलः** : देव! भवतामागमनेन दर्शनेन किं दुर्लभम्? सर्वं कुशलम्। देवर्षे!

**करे वीणां नामश्रुतिमधुरगीतिं कलयतः**
**मुखाम्भोजे दिव्यं जलधितनयाजानिचरितम्।**
**मनो नित्यं नारायणपदसरोजे सुनिरतं**
**सुरर्षे! ते पुण्यागमनमिह सिद्धिं दिशति मे।।१३।।**

**मेना** : सौभाग्येन वयमत्र भगवन्तं पश्यामः।

**अनन्तजन्मार्जितपुण्यसञ्चयात्परप्रसादात्परमेश्वरस्य च।**
**भवादृशा देवगणेषु भाविताः कथञ्चिदस्मादृशदृष्टिगोचराः।।१४।।**

**नारदः** : राजन्! परितुष्टोऽस्मि। नारायणस्ते भद्रं करोतु।

**हिमाचलः** : अनुगृहीता वयम्।

**मेना** : आर्यपुत्र! वत्सा उमापि ब्रह्मसुतं देवर्षिमभिवाद्याशीर्लभताम्।

**हिमाचलः** : देवि! सम्यक् स्मारितम्।

**नारदः** : (स्वगतम्) अधुना देव्या जगदम्बाया दर्शनं भविष्यति।

(प्रकाशम्) राजन् क्व ते राजपुत्री, ममापि परं कौतुहलं प्रेक्षितुम्।

(ततः प्रविशति उमा)

**उमा** : अम्ब! अहं सखीभिः सह ईश्वरमर्चितुं देवालयं गन्तुमिच्छामि। अनुजानीहि माम्।

**मेना** : कथमागतैव मे प्रियवत्सा!

**नारदः** : स्मरणादेषा उपस्थितास्ति। एषा आयुष्मती।

**हिमाचलः** : वत्से! पश्य देवपूज्यतममहर्षिर्नारदः प्राप्त इति। अभिवादय तावदेनम्।

**मेना** : वत्से! अभिवादयैनममोघवाचं महर्षिम्।

**उमा** : देव! नमस्ते।

**नारदः** : पुत्रि! सिद्धार्थायुष्मती भूयाः। (निपुणं निरीक्ष्य स्वगतम्)

**इयं सती रूपगुणप्रकाशितां समस्तमाङ्गल्यमयीं नवां तनुम्।**
समभ्रिता **अशेषशोभानिचयां ~~दधाना~~ भवार्थजाता सुषुमाधिदेवता।।१५।।**
**नमामि विद्यामपरां पराञ्च सौभाग्यदेवीमचलां भवानीम्।**
**अधीश्वरीं तां मनसो भवस्य नवां पराम्बातनुमाश्रितां हि।।१६।।**

**हिमाचलः** : भगवन् सर्वज्ञोऽसि! तद् ब्रूहि मम पुत्रिकायाः सुलक्षणानि।

**मेना** : एतदेव ममाप्यभिलषितम्। कानि सुलक्षणानि वत्सायाः?
पुत्रि! इत आयाहि दर्शय भगवन्तं पाणिरेखाम् (इति दर्शयति)।

**नारदः** : (स्वगतम्)

**प्रपन्नतृप्तं परिवीक्षणेन क्षणेन यस्या जगदम्बिकायाः।**
**लीला तु तस्याः करकञ्जरेखां पश्यामि देव्याः कृपया भवान्याः।।१७।।**

(प्रकाशम्। उमाया हस्तरेखां निरूपयन्) राजन्! सर्वशुभलक्षणैः सम्पन्ना ते सुता।

**अखण्डसौभाग्यसमस्तसम्पदा महर्धिदिव्यायुरमोघदर्शना ।**
**प्रशान्तिसौख्याभिरता सुता तव पयोधिजेवाखिलमङ्गलान्विता।।१८।।**

**हिमाचलः** : अनुगृहीतोऽस्मि।

**मेना** : अनुगृहीताऽस्मि।

**हिमाचलः** : भगवन्! अमोघानि ते आशीर्वचांसि इमानि।

**नितान्तशुद्धा तपसा महीयसा शिवार्थलोका पुरुषार्थसाधिनी।**
**भवादृशामीश्वरभावितात्मनाममोघवाक् नार्थविहायचारिणी।।१९।।**

**मेना** : भगवन्! मोदते चेतः सुधावचः श्रुत्वा।

**सुकल्पसिद्ध्यर्थबलातिबृंहिता हितोपदेशामृतधामवर्षिणी।**
**विशिष्टभावात्मविबोधबोधिनी भवादृशानां सफला सरस्वती।।२०।।**

**नारदः** : वत्स! गिरिराज! यद्यपि सर्वाणि सुलक्षणानि तव सुतायां सङ्घटन्ते, तथापि......।

**हिमाचलः** : (स्वगतम्) तथापीति आशङ्कते चेतः।

**मेना** : (स्वगतम्) किं विवक्षितमिति मुह्यति मनः।

**नारदः** : एषा एका पाणिरेखा सूचयति।

**उभौ** : (ससम्भ्रमम्) किमिति?

**नारदः** : पतिं निश्चयेन प्राप्नोति।

**उभौ** : (सप्रसन्नम्) प्रियं नौ। ननु कीदृशम्?

**नारदः** : **दिगम्बरं भिक्षुकरेणुमण्डितं विरूपनेत्रं जटिलं सुकोपनम्।**
**करे गृहीत्वा च कमण्डलुं महीमपार्थमत्तं विचरन्तमीदृशम्।।२१।।**

**मेना** : (सखेदं सोद्वेगम्) मा मैवम्, प्रतिहतममङ्गलं वत्सायाः।

**हिमाचलः** : मा मैवम्।

**नारदः** : किन्तु रेखा तादृशी।

**हिमाचलः** : (सखेदम्)

**विधाय पूर्वं सकलं सुलक्षणं दिशन् सुताया हि पतिं विलक्षणम्।**
**विधिर्जडो नूनमहो विमूढधीः शिरोऽधिमौलिञ्चरणे न्यवेशयत्।।२२।।**

**मेना** : मैवं मैवम्।

**अहं प्रदास्यामि सुतां सुलोचनां गुणानुरूपाय वराय कोमलाम्।**
**न कण्टकाकीर्णतरुं समाश्रिता सुकल्पयोग्या लतिका हि शोभते।।२३।।**

**नारदः** : पुत्रि! अनिवार्यो विधिः कथमन्यथा कर्तुं शक्यते।

**उमा** : मातः! अलं चिन्तया। स्वकृतमुपभुज्यते। ममैषा गतिः।

**हिमाचलः** : (अपवार्य) मा तावत्। कथमेवं ब्रवीषि मदधीनं तव सम्प्रदानम्।

**मेना** : एवमार्यपुत्र! वत्साया अनुरूपो वरः कल्पयितव्यः।

**नारदः** : सत्यमेवैतद् भविष्यति। पाणिरेखा तु वदति।

**मेना** : वदतु, किं तेन।

**हिमाचलः** : देवि! अनिच्छतोऽपि मम देवर्षिवचनं सत्यमिति मनः प्रत्ययं गच्छति।

**मेना** : हा! वत्साया मम भाग्यं स्फुटितम्। दुर्धिया विधिनाऽपराद्धम्।

**उमा** : अम्ब! अलं विधेराक्षेपेण। न दैवमपराध्यति। मम तु कृतं सुफलति।

**नारदः** : सम्यग् वदति वत्सा सुफलतीति।

**मेना** : **ऋषिवाक्यं न मोघं स्याद् भवितव्यं न चान्यथा।**
**हन्त दुर्भाग्यमस्माकं विषीदामि सुतां प्रियाम्।।२४।।**

**हिमाचलः** : **यत इमा सुता जाता मनसो मोदकारिणी।**
**ततः प्रभृति राज्ये मे सम्पदो द्विगुणीकृताः ।।२५।।**

**नारदः** : सर्वथा लक्ष्मीरिव ते सुता सर्वमङ्गलकारिणी।

**हिमाचलः : सर्वेषां मङ्गलाधान्या मङ्गलं स्यात् कथं मुने! ।**
**आवयोर्नेत्रकौमुद्याः सुतायाः शुभलक्षणम् ।।२६।।**

मेना : भगवन्! जगन्मङ्गलतत्पर! अनुचिन्तय वत्साया अभ्युदयं सौभाग्यम्।

नारदः : अखण्डं सौभाग्यमस्याः, महानभ्युदयः। उपायमेकं वक्ष्यामि येन श्रेयो भविष्यति।

उभौ : (सहर्षम्) अनुग्रहो भविष्यति। शीघ्रं कथय।

नारदः : **अस्याः करस्थाङ्कितरेखयानयोपलक्षितो यादृशरूपवान् पतिः।**
**शिवः कपाली सविभूतिरीश्वरो दिगम्बरस्तादृश एव दृश्यते।।२७।।**
तद् यदि स एव शिवोऽस्याः पतिः स्यात् तदा श्रेयः।

उमा : (स्वगतम्) अपि दैवं विदध्यात् प्रियं मे।

हिमाचलः : एवं सम्भविष्यति।

मेना : सम्भवति शम्भौ तल्लक्षणं किन्तु न स मे वत्साया योग्यो वरः।

उमा : अम्ब! दैवविधानमनिवार्यं पश्य।

नारदः : पुत्रि! मेने नान्यथा मन्तव्यम्। एतदेव भविष्यति। न नारदोऽन्यथा वदति।

मेना : एवमेतद् देव!

हिमाचलः : भगवन्! तत् कथं शिवः स्वभावतोऽसङ्गः अस्याः पतिः स्यात्।

नारदः : यदि ते सुता उमा तपश्चरेत् तदा तपसा तुष्ट आशुतोषः शिवस्तामनुग्रहीष्यति।

उमा : (स्वगतम्) प्रियं मे, अहं तपश्चरिष्यामि।

मेना : क्व तपः, क्व च मे सुता।

हिमाचलः : देव! तपो हि महाकष्टप्रदम्।

नारदः : किन्तु अभीष्टसिद्धिप्रदम्। तपसैव लभ्यः शिवः।
**तपसेद्धो रविश्चन्द्रः प्रकाशेते तपोऽन्वितः।**
**पुरुहूतश्च वह्निश्च समर्थः सर्वसाधने।।२८।।**

हिमाचलः : सत्यं भगवता उच्यते।

**नारदः** : राजन्! उमा तपश्चरणाय समुत्सुका। निमित्तानि शुभानि भवन्ति। समयश्च शुभः। अतोऽद्यैव तपसे एषा तिष्ठतु।

**मेना** : नाहं पुत्रीं प्रेषयिष्येऽतिकठिने तपसि।

**नारदः** : मेने! श्रेयस्ते उमाया ध्रुवं भविष्यति।

**हिमाचलः** : देवि! अनुमन्यस्व। गुरोर्वाक्यमविचारणीयं भवति।

**मेना** : तथास्तु।

**हिमाचलः** : भगवन्! भवदाज्ञया अहं पुत्रीं तपसे अनुजानामि।

**मेना** : पुत्रि। गच्छ तपसा प्रसादय शिवम्।

**उमा** : (सहर्षम्) यथाज्ञापयन्ति गुरवः। अहमद्यैव ईश्वरं प्रपूज्य नियममुपस्थास्ये।

**सर्वे** : **गच्छ पुत्रि शिवस्तेऽस्तु पन्थाः सुखकरः सदा! ।**
**तपश्चर परं तावत् स्वयं नियममास्थिता।।२९।।**

**उमा** : अनुगृहीतास्मि (इति निष्क्रान्ता)।

**नारदः** : राजन्! अहमपि साधयामि देवलोकम्। श्रेयस्तेऽस्तु। (इति निष्क्रान्तः)

**उभौ** : भगवन् नमस्ते।

**हिमालयः** : देवि! वत्सा तपसे गता। अवश्यमेव शिवः प्रसन्नो विधास्यति कल्याणमनुग्रहीष्यति ताम्। तदावामपि शिवं पूजयेव प्रत्यहम्।

**मेना** : यथा वदति आर्यपुत्रः।

**हिमालयः** : **अनुदिनं तपसा नियमैरसौ भवतु हैमवतीपतिरीश्वरः।**
**परमतुष्टमनाः करुणाकरः समहितो महितो भजतां शिवः।।३०।।**

तत् साधयावस्तावत् (इति निष्क्रान्तौ)।

**।। इति श्रीपारसनाथद्विवेदिविरचिते पार्वतीमङ्गले चतुर्थोऽङ्कः।।४।।**

## अथ पञ्चमोऽङ्कः

(ततः प्रविशति सवीणो गायन् नारदः)

**नारदः** : अयि भोः! देवराजप्रियकामाय मया एतदनुष्ठितम्। भगवती पार्वती शिवं प्रार्थयितुं तपसे नियता वर्तते।

**क्व च तपः कठिनं यतिनां क्षमं**
**क्व च हिमाद्रिसुता मृदुविग्रहा।**
**गुरुतरं व्रतमुत्कटमास्थिता**
**भवरता वरताभिनिवेशिता।।१।।**

तदधुना इन्द्रपुरीं गत्वा सुरेन्द्रं सूचयामि एतत्। स च तारकासुरपरित्रस्तो न परित्राणं लभते। ब्रह्मणा च मन्त्रो दत्तो यत् शिवपुत्रेणास्य तारकासुरस्य वधो भविष्यति।

ततः प्रभृति देवराजस्य महान् ज्वरः कथमेतत् भविष्यतीति।

**निरुध्य कामान् त्रिपुरान्तकः शिवः**
**समाधिमास्थाय निवर्तितक्रियः।**
**सती तु जाता हिमवद्गृहेऽधुना**
**कथं विवाहो भविता तयोस्तदा।।२।।**

शिववरणार्थं पार्वती महातपः करोतीति प्रीतो भविष्यति। अहमपि उभयोरुद्वाहं वाञ्छामि तेन जगच्छिवं भवेत्।

इयमिन्द्रपुरी—

**लभ्या यथाविधिकृतैः क्रतुभिस्तपोभिः**
**पुण्यैरनन्तसुखदा परलोभनीया।**
**यस्यै महासुरगणैः सह रिपुभिर्महद्भि-**
**र्देवेश्वरस्य भवति प्रसभं विमर्दः।।३।।**

**मन्दाकिनीपयसि पङ्कजसौरभाढ्ये**
**क्रीडन्ति देववनिताः सुचिरं शुभाङ्ग्यः।**
**आन्दोलयन्ति मरुतः सुरकाननेषु**
**कल्पं सुगन्धनिचयं स्फुटपारिजातम्।।४।।**

इन्द्रोऽपि सन्निहित एवेति तर्कयामि, तद् गन्तव्यम्।

(इति निष्क्रान्तः)

(ततः प्रविशति इन्द्रः सचिन्तः)

**इन्द्रः** : तारकासुरभयकम्पितस्य का नाम मम देवराजता?

**सिध्यन्ति कार्याणि न केवलेन बलेन वा व्यर्थमनोरथेन।**
**सतामुपायेन सुसाधितेन सिद्धं हि कृत्यं श्रियमातनोति।।५।।**

तद् उपायेन प्रवर्त्तितव्यम्। ब्रह्मणा चोपायो दर्शितः।

महर्षिनारदो हिमालयभवनं गतो मन्ये परावर्तित एवेति।

(ततः प्रविशति नारदः)

**नारदः** : वत्स देवेश्वर! अपि स्वस्ति।

**इन्द्रः** : देवर्षे! वन्दे। भवतां दर्शनेन सर्वं स्वस्ति। कथय किं वृत्तम्?

**नारदः** : कृतो विधिः। पार्वती इदानीमुग्रे तपसि वर्तते।

**इन्द्रः** : प्रियं मे। किन्तु भगवान् शशाङ्कमूर्धा तु परमं समाधिं गतः।

**नारदः** : सत्यमुच्यते। सोऽपि प्रसाध्यः।

**इन्द्रः** : को नाम समाधिभङ्गं कुर्यात्। इदञ्च तारकासुरादपि भीतिकरम्।

**कथं समाधिभङ्गः स्याद् विषमाक्षस्य शूलिनः।**
**कथञ्चास्य समुद्वाहो भगवत्या भविष्यति।।६।।**

**नारदः** : उपायेन सर्वं सम्भविष्यति।

**इन्द्रः** : केनापि यत्नेन समाधिभङ्गे त्रिलोकीं भस्मीभूतां द्रक्ष्यति।

**महेश्वरः शूलधरः पिनाकी भग्ने समाधौ कुपितो न साध्यः।**
**तृतीयनेत्रोद्गतकल्पवह्निज्वालैस्त्रिलोकीं नियतं प्रदह्यात्।।७।।**

**नारदः** : कथञ्चित् समाधेः समुत्थितोऽस्माभिर्ब्रह्मपुरोगैः संस्तुतो निश्चयेन कृपां विधास्यति। पश्य,

**सुरैः स्तुतोऽसौ सहसा प्रवृद्धं यः कालकूटं निखिलं पपौ हि।**
**तथा चकारार्तिहरो हरस्तद् दक्षे कृपां देव दयालुरीशः।।८।।**

**इन्द्रः** : सत्यमेवैतत्; किन्तु समाधिभङ्गस्तु दुर्लभः।

**नारदः** : मदनस्तत्र प्रयोक्तव्यः।

**इन्द्रः** : (सहर्षम्) आम्, एवम्, सम्यगुपायश्चिन्तितः। तत् स्मरामि कामदेवम्। (इति स्मृतिं नाटयति)

**कामः** : (सहसा प्रविश्य) प्रणमामि देवं देवर्षिञ्च। को नियोगः?

**इन्द्रः** : सखे! सखेदं ब्रवीमि। तारकासुरत्रासाद् आपद्गतामरावती तत् किञ्चिद् अवश्यमनुष्ठातव्यम्।

**कामः** : आज्ञापयतु भवान्।

**इन्द्रः** : भगवान् भूतभावनः समाधिस्थः। स एवोपायं जानाति।

तद् यतस्व तत्समाधिभङ्गे।

**कामः** : (सत्रासम्) किमिदं भाष्यते देवेन। रुद्रकोपाद् नाहं भविष्यामि।

**इन्द्रः** : मा भैषीः। अहं तव साहाय्यं विधास्यामि। सखे!

**शक्यं हरेर्ज्वलितदीप्तिमतारिणा यत्**
**शूलेन वा त्रिपुरदाहनतत्परस्य ।**
**वज्रेण वा न शतपर्ववता बलेन**
**त्वीषत्करं कुसुमबाणमुखेन तत्ते।।९।।**

**कामः** : अर्थवाद एवैषः। कम्पते मे मनः। दुर्निमित्तं पश्यामि।

**न मेऽस्ति शक्तिः परमेश्वरस्य त्रिशूलहस्तस्य समाहितस्य।**
**कोटिप्रयत्नैरपि पञ्चबाणैर्भेत्तुं मनो देव! ततो बिभेमि।।१०।।**

**नारदः** : वत्स! देवराजनियोगोऽनुष्ठातव्यः, श्रेयस्ते भविष्यति।

**इन्द्रः** : सखे! अजेयोऽसि न भीः कार्या।

**तपसा न बलेन चेज्यया श्रुतिविज्ञानपरात्मना तथा ।**
**सुरसिद्धमुनीन्द्रमानुषैस्त्वमजेयोऽसि सखे! न संशयः।।११।।**

**कामः** : भवत्सहायो विधास्यामि कार्यम्।

**इन्द्रः** : एवमेतद् अधुनैव प्रस्थातव्यम्।

**नारदः** : वत्स इन्द्र! कामेन सह गच्छ साधय कार्यम्।

अहमपि पितरं द्रष्टुमिच्छामि।

**उभौ** : भगवन् नमस्ते।

**नारदः** : स्वस्ति। (इति निष्क्रान्तः)

**इन्द्रः** : सखे! मकरध्वज! सैन्यैः सह त्वं मन्त्रियोगाद् अग्रतो गच्छ, अहं पश्चात् तव साहाय्यं विधास्यामि।

**कामः** : तथा करोमि। (इति निष्क्रान्तः)

**इन्द्रः** : कृत उपायः। बिभेमि, अपि रुद्रो भग्नसमाधिः। त्रिलोकीं न भस्म कुर्यात्। प्रसादयिष्यामस्तं क्रुद्धम्।

कामोऽपि तत्र गतः। अहमपि तत्रैव सन्निहितो भवामि। यत्र

शिवः समाधिं गतः। (इति परिक्रामति)

(ततः प्रविशति समाधिस्थः शिवः कामश्च)

**कामः** : अहो!

**कालाग्नितुल्यं विषमाक्षमीशं निरीक्षितुं नाप्यधुना प्रशक्तः।**
**शङ्के विनाशो न भवेन्ममात्र हरस्य कोपाद् विषमं विभाति।।१२।।**

(परितो विलोक्य) का गतिः। इदानीं प्रतिज्ञातं करोमि।

देवेन्द्रोऽपि सन्निहित एव।

**इन्द्रः** : (उपसृत्य) सखे! मा भैषीः, दयालुः प्रभुः। कुरु प्रयोगम्। अहमिहैवान्तर्हितो भवामि। (इति अपसरति)

**कामः** : तथेति (ध्यानं नाटयति धनुर्गृह्णन्)।

**इन्द्रः** : अहो आश्चर्यम्, आश्चर्यम्। समस्तं विश्वं काममयं प्रफुल्लितं विभाति। तथा हि—

**वासन्तीश्रीस्त्रिभुवनतले कोकिलारावरम्या**
**व्याप्तं विश्वं मधुरवनितानूपुरोद्गीतिरागैः।**
**कामोद्वेगात् सुरमुनिजनाः कामिनीमाश्रयन्ते**
**लुप्ता धर्माचरणनियमाः पञ्चबाणप्रयाणे।।१३।।**

**कामः** : प्रयुक्तं सैन्यम्। इदानीमहम् अजेयशरासने कुसुमबाणं सन्दधे (इति शरसन्धानं नाटयति)।

**इन्द्रः** : अहो! सर्वैः सह ममाप्युत्कण्ठते चेतः। लीलायिता वसुधावनिता। आश्चर्यम्।

**भ्रष्टो वैराग्यसेतुर्मुनिजननियमा योगिबोधाश्च लीना**
**विश्वेऽस्मिन्नङ्गनानां रतिकृतविभवा मोहिनीनां विलासाः।**
**दृश्यन्ते पुष्पसम्पत् परिमललसद्धीरशीताः समीराः**
**क्षुब्धा देवादिलोका विषमशरकृते पञ्चबाणप्रयोगे ।।१४।।**

**कामः** : आश्चर्यम्—

**येन प्रयोगेण समा त्रिलोकी वशीकृता काममयेन तेन।**
**शक्यो न शम्भुः सुसमाधिनिष्ठो जेतुं मयाऽजय्यपराक्रमेण ।।१५।।**

(सक्रोधम्) तदिदानीं पुष्पबाणानामन्तिमः प्रयोगः कार्यो ब्रह्मास्त्रतुल्योऽमोघः। (इति पुनः शरसन्धानं नाटयति)

**इन्द्रः** : **शरे गृहीते कुसुमायुधेन चराचराणामपि मोहनेन ।**
**अचेतनानामपि लक्ष्यते वै स्फुटः प्रभावः किमु चेतनानाम्।।१६।।**

**कामः** : अयममोघः शरः शिवमनः सङ्क्षोभयतु (इति शरं मोचयति)

**इन्द्रः** : स्वस्त्यस्तु लोकाय।

**शिवः** : (शनैर्नेत्रमुन्मीलयन् समाधिभङ्गं नाटयति)

**स्वानन्दनित्यनिरतं सुसमाहितं मे**
**कोऽयं मनो मदयते त्रिपुरान्तकस्य।**
**प्राणाः प्रिया न जगतां स्थितयश्च कस्य**
**यत् कालवह्निरधुना शरसङ्गदीप्तः।।१७।।**

किं मदनोऽसौ? भवतु। तत् को विलम्बः ।

**प्रचण्डनेत्रोत्थमहाज्वलेऽद्य हरस्य मेऽसौ मदनो मदान्धः ।**
**जगत् समग्रञ्च हुताशनास्ये ग्रासीभवेत् स स्वपताद् विधाता।।१८।।**

(इति सहसा उत्तिष्ठति, तृतीयनेत्रमुद्घाटयति। कामश्च सधनुः पतति।

**शिवः** : (सक्रोधम्) केन दुरात्मना कृतान्तो निमन्त्रितः? नूनं देवैरेव।

**अयं प्रचण्डो मम नेत्रजन्मा**
**कामाल्पभक्ष्येण पुनः प्रदीप्तः ।**
**कल्पान्तकोपोग्रहुताशनस्तद्**
**जगत् समग्रं दहताद् विधातुः ।।१९।।**

(ततः प्रविशति ससम्भ्रमो ब्रह्मा इन्द्रो नारदश्च)

**ब्रह्मा** : अलम्, अलम्, महादेव!

**क्रोधं प्रभो! संहर संहरात्र प्रसीद देवेश कृपाधिनाथ।**
**देवाः समे साञ्जलयः स्तुवन्ति प्रसीद मां पाहि निजं सविश्वम्।।२०।।**

**इन्द्रः** : प्रभो! करुणाकर! क्षमस्व क्षमस्व!

**कृतं तु सर्वं जगतां हिताय मयैव शम्भो! मदनः प्रयुक्तः।**
**दासस्य नाथ क्षमतां ममैतमेकापराधं करुणावतार।।२१।।**

**नारदः** :

**देवाधिदेवशरणं वयमास्थितास्ते**
**देवान् विलोकय प्रभो कृपणेक्षणेन।**
**इष्टं कुरुष्व जगतामसुरैः परास्त-**
**सैन्यस्य भीतमनसश्च सुरेश्वरस्य।।२२।।**

**ब्रह्मा** : नाथ! क्षमस्व! दयस्व।

**शिवः** : किं भवन्तः प्राप्ताः। अस्तु उपसंहृतः प्रलयङ्करः प्रकोपः।

**ब्रह्मा** : जीविता त्रिलोकी।

**इन्द्रः** : इष्टञ्च सिद्धं मम।

**नारदः** : महाकृपायतने नेदमसदृशम्।

**शिवः** : तत् किं भवतामिष्टं यदर्थमिदं चेष्टितम्।

**ब्रह्मा** : देव! प्रथमं निरपराधं कामं जीवय।

**शिवः** : भवतां प्रीत्यर्थं प्रसन्नोऽहं वरं ददामि यद् अद्यारभ्य मदनोऽनङ्गः सन् प्राणिनां मनसि भवेद् रत्या सह। मनोजो मनसिजोऽनङ्ग इति ख्यातिं लभताम्। जीवताद् अयं गच्छतु।

**कामः** : (उत्थाय) अनुगृहीतोऽस्मि। (इति प्रणम्य निष्क्रान्तः)

**ब्रह्मा** : प्रभो! देवानां महत् कार्यम्। भीता इमे भवच्छरणागताः।

**शिवः** : अहमवश्यं भवतामिष्टं करिष्यामि। किं समीहितं देवानां वक्तव्यम्।

**इन्द्रः** : नाथ! तारकासुरेण निरस्ता वयं न शरणं लभामहे। तत् परित्रायस्व नः।

**ब्रह्मा** : नाथ त्वय्येव तारकासुरवधो विहितः।

नारदः : **प्रभो! त्वमेवासि शरणं नः सत्क्रिया वेदमार्गश्च लुप्यते परमासुरैः।**
**कथं स्यात् तु सुरत्राणः त्वदधीनं हि नः क्रियाः।।२३।।**

शिवः : कथमिव! किं मया कर्त्तव्यम्?

ब्रह्मा : देव! तारकासुरवधस्तव सुतेन विहितः। स चान्यथा न भविष्यति। अनुग्रहीतव्यञ्च मे वाक्यम्।

**सुतो हि ते कोटिहुताशसुप्रभो महाबलो संयति देवनायकः।**
**भविष्यति स्कन्द इति प्रसिद्धिमागतोऽसुरं तारकमाहनिष्यते।।२४।।**

शिवः : कथमेवं सम्भवेत्। सुत इति कथनाद् देवी सती पुनः स्मृतिपथमागता—

**हता सती दक्षसुता मम प्रिया**
**शिवावमानं दधती न मानिनी ।**
**कथं भवेन्निर्जरकार्यमद्य तद्**
**उपायमन्यं कुरुतात् सुसम्भवम्।।२५।।**

ब्रह्मा : नाथ! न सती प्राकृता नारी। भवतामनादिशक्तिरिति न भवद्भ्यः पृथग् भवितुमर्हति।

**विहाय देहं भवतामुपेक्षणात्**
**सती भवानी गिरिराजसद्मनि ।**
**पुनः प्रजाता भवदर्थमास्थिता**
**दृढं तपोऽनन्यमनाः प्रसीद ताम्।।२६।।**

इन्द्रः : देव! जगदम्बा पार्वती उग्रं तप आचरन्ती तिष्ठति।

नारदः : नान्यत्र भवतो देव्या मनो मनागपि गच्छति।

शिवः : यदि दृढानुरागोऽनन्यपरायणता पार्वत्यास्तर्हि भवतामनुकम्पनाय ग्रहीष्यामि।

ब्रह्मा : सन्देहश्चेत् परीक्ष्यताम्।

इन्द्रः : सर्वथा देवी भवत्परा नान्यपरा।

नारदः : अनन्यस्पृहा देवे सा।

शिवः : (स्वगतम्) यद्यपि देव्या भक्तौ मम न सन्देहस्तथापि लोकार्थं परीक्षा कर्त्तव्या देव्या यशसे च।

(प्रकाशम्) ब्रह्मन् पार्वत्या मयि दृढानुरागः परीक्षणीयः।

**ब्रह्मा : तस्याः परीक्षा कथमादिशक्तेर्जगज्जनन्या भवदेकभक्तेः।**
**तथापि मान्यं वचनं भवस्य दृश्या तपस्या तु परीक्षकेण।।२७।।**

तद् भवानेव परीक्षको युक्तः।

**शिवः** : एवमेतत् पार्वतीपरीक्षां करिष्ये। तदनन्तरं तद्दृढानुरागं वीक्ष्य ग्रहीष्ये।

**ब्रह्मा** : ग्रहणीयैव सा। महान् हर्षः।

**इन्द्रः** : सिद्धं मे कार्यम्।

**नारदः** : प्रियं मे।

**ब्रह्मा** : तद् गन्तव्यमस्माभिः।

**शिवः** : तथा।

**ब्रह्मा : भूयाच्छिवः परममाङ्गलिको भवस्य**
**शक्तेर्वरः सपदि सर्वगिरीन्द्रपुत्र्याः ।**
**देवा भवन्तु सफला हतशत्रुसैन्याः**
**श्रेयांसि विघ्नरहितानि जगत्सु नित्यम्।।२८।।**

**(इति सर्वे निष्क्रान्ताः)**

**।। इति श्रीपारसनाथद्विवेदिविरचिते पार्वतीमङ्गले पञ्चमोऽङ्कः।।५।।**



## अथ षष्ठोऽङ्कः

(ततः प्रविशति ब्रह्मचारिवेषः शिवः)

**शिवः** : **जानामि शुद्धां गिरिराजकन्यां महातपोमूर्त्तिमिव प्रसन्नाम्।**
**मदेकनाथां मयि रक्तचित्तां तथापि देवीं यशसे परीक्षे।।१।।**

पार्वतीपरीक्षार्थं कृतो ब्रह्मचारिवेषः। अहो मदर्थं महोग्रे तपसि देवी नियता वर्तते। तद् गन्तव्यं मया तपस्थलीं पार्वतीं प्रेक्षितुम्। (इति परिक्रामति)

(ततः प्रविशति पार्वती शिवलिङ्गाग्रतो ध्यानं नाटयन्ती)

**उमा** : अद्यैव तपोव्रतनियमपरिसमाप्तिः शिवप्रसादात् प्रसन्नं चेतः।

**स्वामिन् शिवप्रणयिनी भगवन्ननन्या**
**सैषा चिरं सुनियतास्मि गिरीन्द्रजाता ।**
**अद्यास्ति नाथ तपसो नियमस्य पूर्ति-**
**स्तन्मे प्रसीद करुणाकर मां गृहाण ।।२।।**

(इति पुष्पाञ्जलिं समर्पयति) नाथ भवतोऽन्यत्र मनो मनागपि न गच्छेत्। नाथ पुण्यदर्शनेनानुगृहाण।

**शिवः** : अये! एषा गिरिराजकुमारी सुकुमारी मदर्थं महति तपसि नियता। अहो विलक्षणमस्या सौन्दर्यम्।

**एषा नवीनस्फुटयौवनश्रीर्मृद्वी महोग्रैर्नियमैर्विभाति ।**
**निदाघदग्धेव सुवर्णवर्णा प्रफुल्लिता कल्पलता कुमारी।।३।।**

तद् द्रष्टव्या एषा। (उपसृत्य) भद्रे! अपि वर्धते तपः।

**उमा** : (स्वगतम्) अये! कोऽयं ब्राह्मणवटुस्तेजसा रूपेण चाप्रतिमो देव इव उपस्थितः। भवतु पृच्छामि (प्रकाशम्) ब्रह्मचारिन्! स्वागतं तेऽस्तु। को भवान्? इह आसने आस्यताम्, यावदर्घ्यादीनुपकल्पयामि।

**ब्रह्मचारी** : अलमर्घ्यादिना। वाचैव कृतं सर्वम्।

**भासा विभासि रजनीशतलाच्च्युतेव**
**देवी पयोधितनयासमपङ्कजश्रीः।**
**काऽसि त्वमीह शतपत्रमृदुं वपुः स्व-**
**मुग्रे महातपसि किं कठिने दुनोषि।।४।।**

**उमा** : ब्रह्मन्! अहं गिरिराजस्य हिमाचलस्यौरसी पुत्री उमा नाम।

**ब्रह्मचारी** : (साश्चर्यम्) अपि! किं भवती गिरिराजकुमारी। किमिति कलेवरमिदं कान्तं दहसि। अहो पार्वति!

**अनेन कान्तेन कलेवरेण वरेण भोगोचितभाजनेन ।**
**तपो महोग्रं परिसाधयन्ती रक्तोत्पलाग्रेण शमीमभैत्सीः।।५।।**

**उमा** : शिवः पतिर्मे स्यादित्येतदर्थं तपः कृतवती।

**ब्रह्मचारी** : केनोपदिष्टोऽयं पन्था दुष्करः।

**उमा** : सकलमहर्षिकुलालङ्कारभूतेन देवर्षिणा नारदेन गुरुणा।

**ब्रह्मचारी** : स्वेतरकुलाङ्गारेणेति वक्तव्यम्।

**उमा** : अनुचितमिदमवमाननं देवर्षेर्न श्रोतुं शक्नोमि।

**ब्रह्मचारी** : अयि! मुग्धे गिरिवरपुत्रि! सः प्रवञ्चकशिरोमणिः।

**सतां चिह्नच्छायातिलकपरिवेशातिकपटी**
**गृहीत्वा वीणां तां जगति जनभेदं रचयति।**
**मुखे रामं जप्त्वा मनसि मलिनं धारयति च**
**प्रशान्तेऽपि स्थाने झटिति कलहं कारयति सः।।६।।**

अहो व्यर्थमेव तद् वचनं विश्वस्य परिश्रमः कृतः।

**उमा** : ननु नापवक्तव्यो मे गुरुः।

**को नाम नारायणपादपद्मभक्तो जगत्यां खलु तत् समोऽस्ति ।**
**हितोपदेष्टा निरतः परार्थे गुरुः सुरर्षिः परमो दयालुः।।७।।**

**ब्रह्मचारी** : (सहासम्) एतदेव तु कापट्यं तस्य यद् नारायणभक्तोऽपि कपालिनं वरं प्राप्तुमुपादिशत्।

**अहो मुनीनां कपटाग्रगस्य वचांसि विश्वस्य मुधा प्रतप्तम् ।**
**विहाय मुग्धे नियमं समग्रं प्रयाहि शीघ्रं गिरिराजपुत्रि।।८।।**

**उमा** : किं तत्र तस्य कपटकारित्वं पश्यसि।

**ब्रह्मचारी** : एतदेव यत् सर्वगुणरूपयौवनसम्पत्तिशालिनं सनातनं नारायणं विष्णुं तव सुयोग्यं वरं विज्ञायापि कुलशीलहीनं भिक्षुकं कपालमालाधरं वरमुपदिदेश।

**उमा** : न हि तत्र तस्य कामचारः। मम पाणिरेखैव सूचितवती तत्रभवन्तम्।

**ब्रह्मचारी** : अहो! बालिशे! सम्यक् प्रताडितासि तेन कथितमुनिना। क्व तेन ज्यौतिषं शास्त्रमधीतम्।

**उमा** : कथं सर्वज्ञं सर्वदर्शिनं महर्षिमधिक्षिपसि?

**ब्रह्मचारी** : नाधिक्षेपः! यथार्थमुच्यते। असौ मेषमीनमपि न जानाति; अपि तु एवमेव सर्वान् प्रवञ्चयति। पश्य,

**पुत्रान् कलत्राणि धनानि सर्वं विहाय भस्मच्छुरिताङ्गमूढः ।**
**भ्रमत्यवश्यं स इव त्रिलोक्यां यो वोपदिष्टः खलु नारदेन।।९।।**

**उमा** : भवतु, कपटेनैवोपदिष्टाहम्। मम तु इष्ट एव वरः शिव इति न तस्योपदेशाच्चलेयम्।

**ब्रह्मचारी** : (सहासम्) सम्यग् भवत्यां नारदप्रयुक्तेन्द्रजालं निक्षिप्तं प्रतिभाति।

**उमा** : कुत इति?

**ब्रह्मचारी** : भवादृश्या रूपयौवनगुणवत्या राजकुमार्याः सर्वसम्पत्सम्पन्नायाः कुलशीलरूपगुणरहितः कपाली वर इति न युक्तं विभाति। विष्णुरेव तव योग्यो वरः।

**उमा** : भवतु, कपाली स एव मे पतिः, नान्यत्र मनो गच्छति।

**ब्रह्मचारी** : अयि मुग्धे न जानासि,

**कपाली भूतेशो विरहितकुलो दिक्पटधरः**
**चिताभस्मालेपो भ्रमति भुवनं भिक्षुक इव।**
**विरूपाक्षो व्यालग्रथितनृकपालस्रगहितः**
**असङ्गोऽपूतोऽसौ वटतरुतले तिष्ठति हरः।।१०।।**

**उमा** : **स मे नाथो भूयान्मनसि नितरां निष्ठितगणो**
**भवः शम्भुः स्वामी त्रिभुवनपतिर्ब्रह्मपरमम्।**
**शिवः साक्षादात्मा श्रुतिशतपदैर्वन्दितपदो**
**ह्यनन्यासक्ताहं दिवसपतिरक्तेव सुविभा ।।११।।**

**ब्रह्मचारी** : (स्वगतम्) धन्यासि देवि गिरिजे। (प्रकाशं प्रहस्य) अयं तव हठो न युक्तः। तव योग्यस्तु—

**गदाधरः श्रीपतिरीश्वरः परः सपद्महस्तः सरसीरुहेक्षणः।**
**सुराधिदेवः कुलशीलशोभितो वरः स शोभाकरविष्णुरीक्षितः।।१२।।**

**उमा** : **हठोऽस्तु मे शैलनृपात्मजाया न वाग्रहं स्वं विजहामि देवे।**
**गच्छाधुनेतो द्विज किं तवात्र व्यर्थप्रलापेन शिवो वरः स्यात्।।१३।।**

**ब्रह्मचारी** : राजकुमारि! रूपेण गुणैः सम्पदा च विष्णुः शिवमतिशेते तत् किं न वाञ्छसि तमेव।

**उमा** : **युक्तं विहीनं धनयौवनेन गुणेन वा रूपकुलेन शम्भुम्।**
**वरं वृणे सत्यमिदं वदामि, नान्यं कथञ्चित् सगुणं प्रविष्णुम्।।१४।।**

**ब्रह्मचारी** : अपि राजपुत्रि! विष्णुरेव वरस्तव योग्य इति ममापि मतिः।

**उमा** : **अनन्तजन्मार्जितपुण्यकर्मभिरुपासनध्यानपरैर्निषेवणात्।**
**समात्मनाहं शिवमीश्वरं सती वरं वृणे मेऽस्ति दृढा हि भावना।।१५।।**

**ब्रह्मचारी** : (स्वगतम्) एवमेव देवि! ददामि तुभ्यं वरं प्रसन्नोऽस्मि।
(प्रकाशम्) अयि भूधरराजपुत्रि! स तु कपाली ते प्रार्थनीयो वरः कामं दग्ध्वा निष्कामस्त्रिलोक्यां भ्रमति।

**उमा** : (सस्मितम्) तत् किमतः पूर्वं सकामं शिवमज्ञासीः।
**निष्कामपूर्णात्महितानुकम्पी सच्चिन्महानन्दपरात्परः सः।**
**जानामि शम्भुं सगुणं विशेषं न मेऽस्ति मोहः पुनरत्र कश्चित्।।१६।।**
तद् ब्रह्मन् आतिथ्यं गृह्यताम्।

**ब्रह्मचारी** : अस्तु कृतमातिथ्येन गच्छामि (अपसृत्य) पुनः स्वेन रूपेण।
कृतव्रताया देव्या अवश्यमेव मनोगतो वरो देयः। (उपसृत्य)

**धन्यासि शैलतनये न हि ते समास्ति**
**नित्यं श्रिता शिवमधीश्वरमादिशक्तिः।**
**भावो दृढोऽस्ति तव शङ्करपादपद्मे**
**सौभाग्यमङ्गलकरी परमेश्वरी त्वम्।।१७।।**

देवि! मदर्थं कठिनं तपः कृतवती।

उमा : (विलोक्य) कथं प्रभुः स्वामी एव ब्रह्मचारिवेषः समागतः। देव! अनाथां मामाश्रय अनुगृहाण। (पादयोः पतति)

शिवः : **देवि! प्रिये मयि सुनिष्ठितसर्वभावं**
**तप्तं तपोऽतिकठिनं परमं भवत्या।**
**पूर्वं कृतं यदवमानमभूतपूर्वम्**
**अत्र क्षमस्व पुनरप्यपरं विलम्बम् ।।१८।।**

(इत्युत्थापयति)

उमा : (साश्रु) स्वामिन्! मैवं वक्तव्यम्। भवान् प्राप्त इति सिद्धाऽस्मि। तत्,
**जगत्सु सर्वेषु शिवेतरेषु समस्तसम्पत्स्वपि लोभनीषु ।**
**न जातु यातान्मम चित्तमेतदखण्डभावं भजताद् भवन्तम्।।१९।।**

शिवः : देवि! तथास्तु।

उमा : प्रभो! अनुगृहाण मां पूरय मम मनोरथम्।

शिवः : सकलभक्तकल्याणतत्पराया मदनन्यायाः कथं न पूरयिष्ये ते मनोरथम्। तथास्तु।

उमा : अनुगृहीतास्मि।

शिवः : त्वं गच्छ भवनम्। अहमपि गच्छामि।
**भवतु मङ्गलमत्र शिवस्य मे गिरिसुताकरपीडनसम्भवम्।**
**परिणयो जगतां वरकन्ययोस्तदनु मोदकरो भवताच्चिरम्।।२०।।**

**(इति निष्क्रान्तौ)**

**।। इति श्रीपारसनाथद्विवेदिविरचिते पार्वतीमङ्गले षष्ठोऽङ्कः ।।**



## अथ सप्तमोऽङ्कः

(ततः प्रविशति सभृङ्गी शृङ्गी)

**शृङ्गी** : अये मित्र! महान् प्रमोदः।

**भृङ्गी** : किम् अद्य क्वचिल्लड्डुकानि प्राप्तानि?

**शृङ्गी** : त्वं तु भोजनभट्ट एव। न जानासि भगवान् समागतः।

**भृङ्गी** : सखे! सनाथितः कैलासः।

**शृङ्गी** : यावदम्बा नागच्छति तावन्न पूर्णा सनाथता।

**सा श्रीर्भवस्य भवनस्य गिरेर्वनस्य**
**माता गणस्य भरणक्षमशक्तियुक्ता।**
**जाता गृहे गिरिपतेस्तपसि स्थिता या**
**प्रायास्यति स्वभवनं नु कदा प्रसन्ना।।१।।**

**भृङ्गी** : मन्ये जननी न चिरमस्मान् विहाय स्थास्यति।

**सुतान् प्रियान् स्वान्तु यदा स्मरिष्यति**
**बुभुक्षितान् सा चिरपोषिताश्रितान्।**
**विहाय सर्वानितरान् समेष्यति**
**वनं गता धेनुरिव स्ववत्सकान्।।२।।**

**शृङ्गी** : सखे! अस्मान् स्मरन्ती जननी न विलम्बयिष्यति। पश्य,

**भाण्डागारं शून्यमेतद् विना तां वृक्षाः कालेऽपीह नैते फलन्ति।**
**शोभानष्टाः पर्वतस्यास्य सर्वा भ्रान्ताः खिन्ना मादृशा नाथहीनाः।।३।।**

**भृङ्गी** : सखे! शीघ्रमेव मन्ये, अम्बा आगमिष्यति। अस्मान् पूर्ववत् परिचेष्यति।

**शृङ्गी** : अयि मूढ! अम्बा कथञ्चित् स्वसुतान् विस्मरति?

**भृङ्गी** : सत्यं ब्रवीषि। ममाम्बा सदैवास्मान् स्मरन्ती भोजनं पृच्छन्ती आसीत्।

**शुष्कं मुखं वीक्ष्य दयालुरम्बा करेण चालम्ब्य बुभुक्षितोऽसि।**
**भुङ्क्ष्वेति नित्यं मम चिन्तयन्ती न विस्मरिष्यत्यवशं सुतान्तु।।४।।**

श्रृङ्गी : एवमेव, आगमिष्यति न विस्मरिष्यति।

भृङ्गी : परं केनोपायेनागमिष्यति?

श्रृङ्गी : सखे! अद्यैवं श्रुतमस्ति यद् ब्रह्मादयो देवाः स्वामिना सह मन्त्रयितुमागताः।

भृङ्गी : भवेत् कश्चित् स्वार्थस्तेषाम्।

श्रृङ्गी : एवमेतत्, परन्तु,

**स्वार्थप्रवृत्ता अपि निर्जरास्त इष्टं करिष्यन्ति हि निश्चयं नः।**
**चेष्टा न का लोकहिते रतानां श्रेयः प्रसूते महतां जनानाम्।।५।।**

भृङ्गी : सुष्ठूच्यते।

श्रृङ्गी : तत् तैर्भगवत्या उमायाः समागमविषये मन्त्रः प्रवर्तितः।

भृङ्गी : तदा प्रियं नः।

श्रृङ्गी : इदमपि श्रुतं यद् ब्रह्मादेशेन नारदो हिमालयराजेन सह सङ्गम्य सर्वां वैवाहिकवार्तां सुनिश्चितवान्।

भृङ्गी : महर्षिर्नारदस्तु पूर्वमेव कृतप्रयत्न आसीत्।

श्रृङ्गी : तद् भगवतः शिवस्य विवाहो भगवत्या पार्वत्या सह निश्चित एव।

भृङ्गी : तद् महान् हर्षः। अस्माकमम्बाऽऽगमिष्यति।

श्रृङ्गी : पश्य, सुरा अपि स्वस्वसमाजैर्वरयात्रायां गन्तुं समागताः।

भृङ्गी : अये! सत्यमुच्यते।

श्रृङ्गी : मित्र! पश्य, पश्य—

**अयं स विष्णुर्गरुडाधिवाहनो गदारिशङ्खैर्लसितैश्चतुर्भुजैः।**
**जगन्महास्तम्भसमैः सुशोभितः समेति देवं भगवन्तमीश्वरम्।।६।।**

भृङ्गी : सखे! कौतुकं पश्य, पश्येतः,

**अयं सकूर्चैः पलितैश्चतुर्मुखैः पितामहो हंसगतो विराजते।**
**सपात्रमाल्यश्रुतिशोभितैः करैः सुरैर्वृतो ब्राह्ममहौजसा ज्वलन्।।७।।**

श्रृङ्गी : मित्र! इतः पश्य इमे देवगणाः कृतसुन्दरवेशपरिग्रहा वयोभिः पञ्चविंशतिवार्षिकाः शोभन्ते। ननु तेषां मध्ये,

**अयं सुरेशो गजपृष्ठसंस्थितः पुरन्दरो वज्रकरोऽत्र दृश्यते।**
**सुरेषु सर्वेषु समूहितेष्विह सुमेरुकल्पो मरुतां समेधिता।।८।।**

**भृङ्गी** : अयि! देवगन्धर्वकिन्नराणां सिद्धमुनिविरागिणां महान् समवाय उपस्थितः।

**शृङ्गी** : मित्र! इतः पश्य पश्य, अस्माकं समाजः कीदृश इति।

**वेताला भूतसङ्घा नरशवशिरोमाल्यभूषा विरूपा**
**नग्नाः पैशाचसेनाः कृतरुधिरवशापङ्कलिप्ता विचित्राः।**
**नृत्यन्तो युध्यमाना प्रमथबहुगणा भस्मविच्छुरिताङ्गा**
**दृश्यन्ते त्रासयन्तो विविधपरिकराः कालदूताः प्रयाताः।।९।।**

**भृङ्गी** : एवमेतत्। वयमपि साधयामः। औत्सुक्यं मां बाधते।

**शृङ्गी** : ननु भगवानपि धृतवरवेशो ब्रह्मादिसुरैः परिवृतः सवाहनः सज्जित एव। तदावामपि साधयावः।

(इति निष्क्रान्तौ)

**(इति प्रवेशकः)**

(ततः प्रविशति यथोक्तः शिवो ब्रह्मादिसमाजपरिवृतः)

**ब्रह्मा** : (शिवं प्रति) देव! सम्भृताः सर्वे सम्भाराः। समवेताश्च सर्वे देवादयस्तद् आज्ञापय वरयात्राम्।

**विष्णुः** : एवमेव देव! सर्वे वयं समवेताः। निमित्तानि च मङ्गलानि दृश्यन्ते। अथवा किं तेन,

**हलाहलं नाथ तवात्र देहे पीतं जगद्भस्मकरं सुधाभूत्।**
**शिवेति नाम्नाभिहितेन सर्वममङ्गलं मङ्गलमस्ति नित्यम्।।१०।।**

**ब्रह्मा** : भो नारायण! वरयात्राप्रस्थानात् पूर्वं वरपरीक्षणं कर्तव्यमवशिष्टम्। तत् कुरु त्वम्।

**विष्णुः** : यथा वदति भवान् (इति शिवं निरूपयति सहासम्) भो विधे! एवं वरो न त्वया पूर्वं दृष्टः सृष्टो वा

**कपालमालः शशिशेखरो महाजटाधरो भस्मतनुर्दिगम्बरः।**
**महाहिभूषो वृषवाहनो वरो विरूपनेत्रः खलु दिव्यदर्शनः।।११।।**

ब्रह्मा : कथं भवान् भूतभावनं पशुपतिं हसति। पश्य,

**पुरारिः प्रियः सत्त्वभस्मानुलेपस्तृतीयाक्षिविज्ञानयुक्तः कपाली ।**
**सुधासूतिगङ्गाधरः शूलहस्तः सुविज्ञानगोवाहनो नीलकण्ठः।।१२।।**

शिवः : (सस्मितम्) भो नारायण! सुराश्च! इदानीं प्रस्थातव्यं न वेति वरयात्राधिकारो ब्रह्महस्तेऽवलम्बितः।

विष्णुः : कथं न। अनेनैव तु दुर्घटमपि सुघट्यते।

ब्रह्मा : नैव नैव, अयं विष्णुः सर्वपालनक्षमो वरयात्रास्वामी।

विष्णुः : अये सुराः! सुवेषा वयमेकतश्चलेम, शिवाद्भुतसेना चैकतः। अन्यथा परपुरे अवश्यमेवास्माकमुपहासो भविष्यति। (इति सर्वे हसन्ति)

ब्रह्मा : भो नारायण! अलमुपहासेन।

विष्णुः : अयि ब्रह्मन् चतुर्मुख! तत्र वरयात्रायां कः समधीः। गोत्रोच्चारे च का वंशावली। (इति सर्वे परिहसन्ति)

ब्रह्मा : सर्वं भविष्यति। इदानीं प्रस्थातव्यम्।

शिवः : (सस्मितं पश्यति)

विष्णुः : तर्हि प्रस्थातव्यम्। (इति सर्वे परिक्रामन्ति)

(मार्गे भूताः पिशाचाश्च लीलां कुर्वन्ति हसन्ति च परिक्रम्य स्थित्वा)

ब्रह्मा : इयमस्ति गिरिराजपुरी! पश्य—

**सिक्ता राजपथा सुगन्धपयसा माल्यैः पताकादिभि-**
**र्व्याप्ता रक्षिभिरत्र राजभवनं दिव्यं ध्वजैः शोभितम्।**
**माङ्गल्यं परिदृश्यते नगपतेः सर्वत्र पुर्यां महत्**
**सम्पत्तिसकला जनेषु विपुलो हर्षो विवाहोत्सवात्।।१३।।**

विष्णुः : ब्रह्मन्! कथं नैतद् भवेत्!

**यस्यालये वसति सर्वधनाधिदेवी**
**लक्ष्मीः समस्तजगतामचला भवानी ।**
**तस्याचलेन्द्रदुहिताविभवो न कस्मात्**
**सर्वातिशायिमहिमा वसुधाधरस्य।।१४।।**

**ब्रह्मा** : तर्हि इहैव वयमावासं कल्पयेम। यावद् आगच्छन्ति हिमगिरिराजदूताः।

**विष्णुः** : (सस्मितम्) भो भो देवाः! पश्यत पश्यत—

**भयातुराः शीघ्रतरं द्रवन्ति प्राणैः सहैते पुरवासिनो हि ।**
**बाल्यः स्त्रियो नाम निरीक्षितुं न क्षमाः समाजं सकलं वरस्य।।१५।।**

**ब्रह्मा** : अपि गिरिराजः सपरिकर आगच्छन्नेव भवेत्।

**विष्णुः** : (सहासम्) भोः भोः वरयात्रिणः! प्रेतपिशाचा निवर्तध्वम्।

**युष्मान् प्रेतपिशाचभूतबहुलान् वीभत्सरौद्रप्रियान्**
**दृष्ट्वा कृष्णमुखान् भयातुरजनाः स्थातुं न शक्ताः क्षणम्।**
**आगच्छेयुरथापि केचिदपि ये प्राणान् धरेयुर्यदि**
**ह्यातिथ्याय च सत्क्रियार्थमिह कः पीतामृतो वर्तते।।१६।।**

(इति सर्वे हसन्ति)

(ततः प्रविशति हिमालयराजः सपरिकरः सोपहारः, वरयात्रिणो विलोक्य स्वगतम्)

अये! एते वरयात्रिणो विरूपास्तादृश एव वरः। न जाने महादेवी मेना वरं विलोक्य कां दशां भजिष्यति। अथवा भगवतः शङ्करस्य विभूतिरेषा। न चिन्तनीया। तद् गत्वा सम्मानयामः। (प्रकाशम्) भो! भो! देवाः! पितामहादयः! स्वागतम्, स्वागतम्। इमानि पाद्यानि अर्घ्याणि चेमानि।

अयि भोः परिचारकाः! परिदीयन्तामिमानि।

(परिचारकाः भीता अर्घ्यपात्राणि संस्थाप्य द्रवन्ति)

**हिमाचलः** : न भेतव्यम्, न भेतव्यम्।

(परिचारकाः पृष्ठे मुखानि कृत्वा ददति)

**ब्रह्मा** : कृतमातिथ्यमिदानीं द्वारपूजा भवतु।

**हिमाचलः** : एवमेतत् (इति शिवपूजनं करोति)।

वरश्च प्रेषणीयो विवाहाय। मा भूत् कालस्य पर्ययः। भो परिचारकाः! भवन्तो वरयात्रिणः सेवायां संलग्ना भवन्तु।

**ब्रह्मा** : शुभमिदं वैवाहिकं लग्नं नक्षत्रञ्च तद् वरयात्रिणो जनावासं गच्छन्तु, वयञ्च वैवाहिकं कृत्यं निष्पादयामः।

**विष्णुः** : यथाशीघ्रमेते व्रजन्तु भोजनादिक्रियां कुर्वन्तु।
(इति ब्रह्माणं विष्णुं नारदमिन्द्रञ्च विहाय सर्वे निष्क्रान्ताः)

**हिमाचलः** : देव! वरं नयतु राजभवनप्राङ्गणे।

**ब्रह्मा** : तथेति (इति सर्वे परिक्रामन्ति)।
(ततः प्रविशति ससखी मेना धृतपूजनसामग्रीहस्ता)

**हिमाचलः** : देवि! वत्साया वरः परीक्ष्यताम्।

**मेना** : (शिवं विलोक्य भीता किञ्चिदपसृत्य विष्णुमुखी भूत्वा)
किम् अयं वरः?

**विष्णुः** : **कथं वरोऽहं जगदम्बिकाया पूज्या च मे मङ्गलदेवता सा।**
**वरस्तु योग्यो भगवान् महेशः परात्परं ब्रह्म गुणान्वितश्च।।१७।।**
देवि! अयं वरः पूज्यश्च।

**ब्रह्मा** : देवि!

**परो वृषारूढमहेश्वरोऽयं कपालमालाधर आत्मरूपः।**
**विभूतिमान् सर्वगुणप्रपन्नः वरोऽस्ति नित्यं तव पुत्रिकायाः ।।१८।।**

**मेना** : (सभयं कम्पमाना) आर्यपुत्र!
परित्रायस्व, परित्रायस्व, नाहमेनं द्रष्टुं शक्नोमि।

**हिमाचलः** : प्रिये! आश्वस्यताम्। अयं साक्षात् शिवो महेशः प्राप्तोऽनुग्रहाय।

**मेना** : एतदर्थं कोमलया वत्सया परितप्तम्। अहो वृथा गतं तपः सर्वम्।

**हिमाचलः** : देवि! अयं परमात्मा उपस्थित इत्यवेहि।

**मेना** : आर्यपुत्र! निवर्तय सादरमेनम्। नाहं कमलमार्दवां वत्सां कपालिना सङ्गमयिष्यामि।

**अहो! सुताया मम कोमलाया वज्रेण भाग्यं लिखितं विधात्रा।**
**यदेष कापालधरो विरूपो वरः कृतस्तेन जडेन नूनम् ।।१९।।**

**विष्णुः** : भो ब्रह्मन्! श्रुत्वा प्रसन्नो भव महादेवी-मेनाभाषितं गालिवाक्यम्।

**ब्रह्मा** : भवतु, मङ्गलमिदम्। (सस्मितम्) देवि!

**सुता न ते प्राकृतराजपुत्री जाता पराम्बा जगदीश्वरी सा।**
**अयं कपाली वृषभाधिरूढो महेश्वरस्तत् पतिरस्ति नित्यः।।२०।।**

**नारदः** : देवि! मान्यथा मंस्था। एतत्तु पूर्वमेव उमायाः पाणिरेखादर्शने भाषितमासीत्। तत् किमिदानीं विशङ्कसे?

**मेना** : गुरो! देवर्षे!

**वृथा प्रतप्तं नियतं मतं यत् श्रुतञ्च धर्मो मम पुत्रिकायाः।**
**नाहं करिष्यामि सुताप्रदानं निवर्ततामस्य वरस्य यात्रा।।२१।।**

निवर्ततामेष वरः स्वदेशम्

**विष्णुः** : (सोपहासं ब्रह्माणं प्रति)

**विधे! विधिस्ते नितरामसत्यो विभाति राज्या वचनेन तत्किम्।**
**गच्छेम शीघ्रं यत आगता नु हरस्य पाणौ न विवाहरेखा।।२२।।**

**हिमाचलः** : देवि प्रिये! किमिदं भाषसे? ननु उपस्थिता देवेशाः।

**इन्द्रः** : (स्वगतम्) अपि राज्या हठेन मम सङ्घटितोपायो वृथा न भवेत्। (प्रकाशम्) देवि! न भ्रमः कार्यः। साक्षाच्छिव एव तव पुत्रिकावरः प्राप्तः।

**नारदः** : देवि! किं भगवन्तं शिवं त्रिलोकाधिनाथं न जानासि? पश्य तावत् पुनः स्वेन चक्षुषा भगवतोऽद्भुतं रूपम्।

**मेना** : दृष्टमस्य रूपं किं पुनर्दर्शनेन।

**ब्रह्मा** : देवि! निरीक्षस्व तावत् प्रियं रूपं शङ्करस्य।

**मेना** : (विलोक्य साश्चर्यम् स्वगतम्)

**अनन्तशोभाकर ईदृशो वरो न कोऽपि देवेष्वपि दृश्यतेऽधुना।**
**समस्तसामर्थ्यविभूतिरूपवान् शिवः सहोमः प्रभया विभूषितः।।२३।।**

(इति विलोक्य क्षणं ध्यानस्था भवति)

**हिमाचलः** : देवि! अयं साक्षाज्जगदीश्वर इत्यवेहि।

**ब्रह्मा** : पुत्रि! सौभाग्यं तव।

**नारदः** : देवि! एतत् पूर्वमेव मया भाषितं मान्यथा कार्षीः।

**हिमाचलः** : देवि! परीक्षस्व वरम्।

**मेना** : एवमेतत्, आर्यपुत्रो यथा वदति।

(इति सप्रसन्ना वरं परीक्षते)

**ब्रह्मा** : पुत्रि मेने! वत्स गिरिराज! शीघ्रमेव पाणिप्रदानं भवतु। मुहूर्तं त्वरयति माम्।

**हिमाचलः** : यथा वदति भवान्। (मेनां प्रति) देवि! शीघ्रमेव वत्सां कृतालङ्कारां विवाहमण्डपं प्रवेशय।

**मेना** : यथाज्ञायपति आर्यपुत्रः (इति निष्क्रान्तौ)

**विष्णुः** : भो ब्रह्मन्! कथञ्चिद् आश्वासिता वयम्।

**ब्रह्मा** : भो! विष्णो! त्वया उक्तं शिवपाणौ न विवाहरेखेति, इदानीं व्यर्थं ते वचनम्। सत्यश्च मम विधिः।

(इति सर्वे हसन्ति)

(ततः प्रविशति सख्या सह उमा)

**सखी** : अयि राजकुमारि! फलितस्ते मनोरथः। लब्धञ्च महातपसां फलम्।

**उमा** : सखि! सत्यं ते वचनं स्यात्।

**सखी** : अयि भीरु! किमद्यापि सन्देहः।

**तपोऽनुरागं तव वीक्ष्य सादरं शिवो हि साक्षात्परिणेतुमागतः।**
**सविष्णुवेधाः स्वयमद्य निर्जरैः सहैव सौभाग्यमिदं सदा भवेत्।।२४।।**

**उमा** : दैवं निर्विघ्नं प्रार्थये।

**सखी** : साक्षात् शिवे प्राप्ते को विघ्नो नाम।

**उमा** : सखि! भगवन्तं शिवं विरूपं विलोक्य अम्बा नान्यथा मन्येत।

**सखी** : न हि न हि ब्रह्मादिदेवैराश्वासिता स्वयञ्च शिवं प्रियदर्शनं कृत्वा इदानीं मोदमाना तव पाणिग्रहमनुमन्यते।

**उमा** : तर्हि प्रियं मे। भगवतोऽनुग्रहो भविष्यति।

**सखी** : कोऽनुग्रहस्तस्य? त्वमेव रूपेण गुणेन शीलस्वभावेन च सर्वानुग्राहिका।

**उमा** : नैवं वक्तव्यम्, परमेश्वरो ममाश्रयः।

**सखी** : (निरूप्य) सखि शोभसे इदानीम्।

**तुलां न कश्चिन्नवरूपयौवनं गुणप्रकर्षं सुविभूषितं वपुः।**
**दधाति दिव्यं च ददाति कामपि कलांशमात्रां सुरसुन्दरीतनौ।।२५।।**

**उमा** : अयि! प्रियवादिनी असि।

**सखी** : का मे प्रियवादिता? यथार्थमुच्यते,

**अपूर्वया दिव्यवपुश्श्रिया तव विभूषणान्येव विभूषितानि हि।**
**शिवः सुधन्यो यदनन्यसङ्गमात् सुरद्रुमः कल्पलतासुशोभितः।।२६।।**

**अङ्काद् विनिर्गत्य गुरोस्तु बाल्यात् कृतानुरागा नवयौवनेन।**
**पदेन त्वं सुन्दरि! सुन्दरीणां कृतालया शङ्करमानसेऽसि।।१७।।**

**उमा** : (सलज्जम्) अयि! व्यर्थप्रशंसनेनालम्।

**सखी** : पश्य! इमे ब्रह्मादयो देवाः। अत्र,

**अयं महेशस्तव रूपयौवनपुराणभोक्ता हृदयेश्वरो वरः।**
**यदङ्गभूषा यदनङ्गनोदिनी भविष्यसि त्वं कमलेव चक्रिणः।।२८।।**

**उमा** : सखि! वचनरचनाचतुरासि।

**सखी** : तत् सखि! नयनानन्दकरं शिवरूपं पश्य।

**सुधारश्मिश्चन्द्रः शिरसि जटिले भात्यनुपमं**
**विषं कण्ठे ब्रूते जगदवनशीलं परकृपाम्।**
**त्रिशूलं हस्ते यद्विगमयति शूलानि भजतां**
**तृतीयं यन्नेत्रं तदिह पवितं ज्ञानममलम्।।२९।।**

**उमा** : (शिवं विलोक्य) (स्वगतम्) अहो! अपूर्वं रूपं स्वामिनः।

**सखी** : सखि! किं प्रियं पश्यन्त्या तव सक्तैव दृष्टिः? पश्य, पश्य,

**शिवः साक्षादात्मेन्द्रियमुखगवि बिम्बित इव**
**जटा गङ्गा चन्द्रो गरलमहिभूती सममिदम्।**
**स्वनिष्ठं मायाया विलसितमहो रूपमधुरम्**
**अनादिस्त्वं देवी भवतु तव सङ्गः शिवमयः।।३०।।**

**उमा** : अयि विज्ञानवादिनि! पण्डिता प्रतिभासि।

**सखी** : सखि! उपसर्तव्यं विवाहमण्डपे। (इत्युभे परिक्रामतः)

**सखी** : (उपसृत्य) महाराज! एषा राजकुमारी प्रापिता।

**हिमाचलः** : देव! ब्रह्मन्! एषा वत्सा कृताऽलङ्कारा प्राप्ता, तत् को विलम्बः?

**ब्रह्मा** : प्रवर्त्तताम् पाणिग्रहणसंस्कारः।

**हिमाचलः** : (जलादिकं गृहीत्वा) देव! महेश्वर! प्रतीक्षतां तावत् पाणिमुमायाः। गृह्यताञ्चेमां मया प्रदत्ताम्। त्रिर्वदामि।

(इति मन्त्रपूर्वकं कन्यायाः पाणिग्रहं कारयति। शिवो गृह्णाति। नेपथ्ये विजयध्वनिः)

**नेपथ्ये** : **पाणिग्रहस्त्रिजगतां परमेश्वरेण**
**देव्याः सुमङ्गलकरोऽस्तु गिरीशपुत्र्याः।**
**देवा भवन्तु सफला निहतारिवंशाः**
**पापानि यान्तु नितरां प्रशमं समेषाम्।।३१।।**

**ब्रह्मा** : सञ्जातः पाणिग्रह इदानीम्, अनादिसिद्धदेवस्येश्वरस्य सर्वनामरूपगोत्रस्य सर्वनामरूपगोत्रया सह महादेव्या अनादिरूपया सह विवाहः प्रवर्तताम्।

**नारदः** : एष अग्निः सुप्रज्वालितः (इति अग्निं प्रज्वालयति)।

(ब्रह्मा शिवपार्वत्योः प्रदक्षिणां कारयति)

**ब्रह्मा** : भगवन्! सिन्दूरदानं कुरु।

**शिवः** : तथा (इति सिन्दूरदानं करोति)।

**ब्रह्मा** : जातो विधिः, जगन्मङ्गलकरः परिणयः शिवपार्वत्योः।
**परिणयो गिरिजाशिवयोः सदा जगति पूर्वमभूदुदयङ्करः।**
**तदनु सर्वजनेषु भवेन्मुदा शिवकरः सुखसन्ततिदायकः।।३२।।**

**विष्णुः** : **तज्जगन्मङ्गलं जातमद्य प्रभोः शङ्करस्योमयाभूद् विवाहोत्सवः।**
**पापतापापहो देवहर्षोद्‌गमस्तारकादेर्मनश्शूलकारी शिवः।।**
**भक्तवृन्दप्लवो भाववारांनिधेः कीर्तनीयस्तनूभृत् समूहैः शुभः।**
**सर्वलोके विवाहप्रसङ्गे सदा श्रावणीयः सुगानीय एवं मुदा।।३३।।**

**इन्द्रः** : **चिरात् प्रविष्टं हृदये मदीये रिपोरवध्यत्वमहाश्मकष्टम्।**
**जाते शिवस्याचलराजपुत्र्याः समुद्‌धृतं तत् सुखदे विवाहे।।३४।।**

**नारदः** : **तृप्तोऽस्मि देवं गिरिराजपुत्रीसनाथितं मोदकरं विलोक्य।**
**अद्यास्ति जन्तोः सफलं ममैतत् संसारजन्मैतदनुग्रहेण ।।३५।।**

**शिवः** : भवतां प्रीत्यै मयैतद् अनुष्ठितम्, तद् भवतां मनोरथः शुभः पूर्णो भूयात्।

(पार्वतीं विलोक्य) देवि!

**सुखं समाधौ न तथावलब्धं यथाधिगत्याद्य गिरीशपुत्रीम् ।**
**सुदुश्चरं नाम तपो हि तप्तं क्षमस्व मां देवि! विलम्बनाय।।३६।।**

**उमा** : (साश्रु) स्वामिन्! मैवं वक्तव्यम्।

**जगत्सु सर्वेषु शिवेतरेषु समस्तसम्पत्स्वपि लोभनीषु।**
**न जातु यातान्मम चित्तमेतद् अखण्डभावं भजताद् भवन्तम्।।३७।।**

अनुगृहाण मां देव, पुनर्मोहो न संविशेत्, अनन्यसक्तभावाहं, कृपया भक्तवत्सल!

**शिवः** : **तथास्तु देवी गिरिराजपुत्री त्वं मे मनोवृत्तिरिवासि सिद्धा ।**
**आलम्ब्य त्वां भक्तजनस्य सर्वम् इष्टं प्रकुर्वे सततं सुखं स्यात्।।३८।।**

अस्तु, सर्वलोकसुखं शिवमस्तु।

**ब्रह्मा** : देवराज! सिद्धस्ते मनोरथः किमन्यत् प्रियमुपहरामि।

**इन्द्रः** : किमन्यत् प्रियं मे स्यात्? इदं भरतवाक्यमस्तु—

**धनधान्यसमृद्धिसंयुता वसुधा सर्वफला भवेत् सदा ।**
**सुखमङ्गलदिव्यसम्पदा श्रुतिगोब्राह्मणबोधमण्डिता।।३९।।**

**भूयात् सुखं सर्वजगत्सु नित्यं शिवस्य भक्तिर्जनमानसेषु ।**
**जयः सुराणां श्रुतिपालकानां पराजयो देवरिपोः समन्तात्।।४०।।**

**श्रेयः सदा भवतु सर्वजनस्य सर्वं काव्यस्य कर्तुरपि मङ्गलनाटकस्य।**
**श्रोतुर्गिरीन्द्रतनयाचरितस्य नित्यं पादारविन्दरतिरस्तु महेश्वरस्य।।४१।।**

**तथास्तु सर्वं गिरिजाप्रसादाद् जगन्महामङ्गलमीश्वरस्य ।**
**कृपेक्षणेनात्र समस्तशत्रोः पराजयो वाग्विजयः कवीनाम्।।४१।।**

**(इति निष्क्रान्ताः सर्वे)**

**।। इति सप्तमोऽङ्कः।।**

**।। पूर्णमिदं श्रीपारसनाथद्विवेदिविरचितं पार्वतीमङ्गलं नाटकम् ।।**

# सुसङ्ग्राह्याणि अभिनवप्रकाशनानि

१. **कातन्त्रव्याकरणम्** : आचार्यशर्ववर्मप्रणीतो व्याकरणशास्त्रस्यापूर्वोऽयं ग्रन्थः श्रीदुर्गसिंहकृताभ्यां **कातन्त्र-वृत्ति-टीकाभ्यां**, श्रीमत्त्रिलोचनदासकृतया **'कातन्त्रवृत्तिपञ्जिका'**टीकया, कविराजसुषेणशर्मकृतया '[illegible]-चन्द्र'टीकया, अथ च डॉ. जानकीप्रसादद्विवेदिकृतया **समीक्षया**, विवरणात्मिकया भूमिकया, अनुस[illegible]त्मक-परिशिष्टैश्च सनाथीकृत्य सुसम्पाद्य प्रकाशितः —
प्रथमो भागः [illegible]०.००
द्वितीयो भागः खण्डम्-१ [illegible]०.००
द्वितीयो भागः खण्डम्-२ [illegible]०.००

२. **परशुरामकल्पसूत्रम्** : तन्त्रशास्त्रस्य सूत्रात्मकोऽयं ग्रन्थस्तन्त्रसिद्धान्तैः सह स[illegible] [illegible] प्रतिपादकोऽस्ति। श्रीरामेश्वरवृत्तेर्मुख्यांशेन समलङ्कृतो **नीरक्षीरविवेका**भिधेन **भाषा**[illegible] संव[illegible] प्रो. विद्यानिवासमिश्रैः, डॉ. परमहंसमिश्रैश्च सुसम्पाद्य प्रकाशितः — [illegible]०.[illegible]

३. **सौभाग्यरत्नाकरः** : तन्त्रशास्त्रस्य समृद्धोऽयं ग्रन्थः श्रीविद्यानन्दनाथविरचितः सौभाग्यसंवर्द्धन[illegible] [illegible]दुदे[illegible] तरङ्गायितः श्रीविद्यायाः सम्प्रदायसिद्धानां राद्धान्तानां समुपासनपद्धतीनाञ्च प्रतिपादको र[illegible]करसदृशो विराजते। स्वात्मविमर्शाख्यया भूमिकया विभूष्य डॉ. परमहंसमिश्रैः सम्पाद्य प्रकाशितः— ३५०.००

४. **प्राणतोषिणी** : श्रीरामतोषणभट्टाचार्येण प्रणीतस्तन्त्रशास्त्रस्य महनीयोऽयं ग्रन्थः। अस्य प्रथमभागस्य विषयवस्तु सर्ग-धर्म-अर्थेति काण्डत्रयेण विभज्य प्रस्तुतम्। ग्रन्थोऽयं सुविस्तृतया भूमिकया समलङ्कृत्य डॉ. हरिवंशकुमारपाण्डेयेन सुसम्पाद्य प्रकाशितः— प्रथमो भागः ४५०.००

५. **जैमिनीयं सामगानम्** : जैमिनिमुनिना प्रणीतं ग्रन्थरत्नमिदं द्वितीयसंस्करणात्मकं प्रकाशतामानीतम्। ग्रन्थेऽस्मिन् सामगानस्यानेकेषां छन्दसामुपबृंहणमस्ति। ग्रन्थोऽयं श्रीरामनाथदीक्षितस्य विस्तृतया भूमिकया सुशोभितोऽस्ति— २००.००

६. **केदारखण्डः** : स्कन्दपुराणीयमाहेश्वरखण्डान्तर्गतकेदारखण्डस्य प्रकाशनं प्रो. वाचस्पतिद्विवेदिनो **हिन्दी-भाषानुवादेन** सह कृतमस्ति। पौराणिककथानकैः सत्कर्मणो भगवत आशुतोषस्य भक्तिभावनायाः सततं प्रेरणाप्रदाने पूर्णरूपेण [illegible] [illegible]। प्रो. द्विवेदिनो विस्तृतया भूमिकया सनाथितोऽयं प्रकाशितः— प्रथमो भागः ४६०.००

७. **सात्वतसंहिता** : [illegible] ग्रन्थः अलशिङ्गभट्टस्य व्याख्यया सनाथितः प्रकाशतामानीतः। श्रीव्रजव[illegible] [illegible] [illegible]भाष्यस्य ग्रन्थस्यास्य द्वितीयं संस्करणं प्रस्तूयते— ३६०.००

८. **श्रीमालिनीविजयोत्तरतन्त्रम्** : तन्त्रशास्त्रस्य ग्रन्थोऽयं डॉ. परमहंसमिश्रस्य **'नीरक्षीरविवेक'**भाषाभाष्येण समलङ्कृत्य प्रकाशतामानीतः। ग्रन्थोऽयं सम्पूर्णाध्वावर्गोपरि स्वकीयां स्वतन्त्रां दृष्टिं प्रस्तौति। स्वात्म-विमर्शात्मिकया भूमिकया विभूष्य डॉ. परमहंसमिश्रैः सम्पादितोऽयं ग्रन्थः प्रकाशितः— २४०.००

९. **बौद्धदर्शन और मार्क्सवाद** (परिसंवाद-६) : विश्वविद्यालयस्यास्य श्रमणविद्यासङ्कायेन समायोजितायां सङ्गोष्ठ्यां विश्रुतैर्विद्वद्भिः पठितानां विशिष्टनिबन्धानां सङ्कलनं विहितम्। संस्कृत-हिन्दी-आङ्ग्ल-भाषामयान् निबन्धान् सङ्कलय्य डॉ. रमेशकुमारद्विवेदिना सम्पादितोऽयं ग्रन्थः प्रकाशितः— ३६०.००

१०. **मैत्र्युपनिषद्** : श्रीरामतीर्थविरचितया **'दीपिका'**ख्यसंस्कृतव्याख्यया, प्रो. ओमप्रकाशपाण्डेयेन सनाथितया **हिन्दीव्याख्यया** विस्तृतया भूमिकया सम्भूष्य सम्पाद्य च प्रकाशितोऽयं ग्रन्थः— १८०.००

११. **श्रीमद्भागवत में सांख्ययोग के तत्त्व : एक परिशीलन** : श्रीमद्भागवतस्य दार्शनिकविश्लेषणात्मकोऽयं ग्रन्थः प्रो. विमलाकर्नाटकमहोदयाभिर्हिन्दीभाषायां प्रणीतः। दर्शनेतिहासाख्यपटलद्वयेन विभक्तोऽयं ग्रन्थो विस्तृतया भूमिकया परिशिष्टादिभिश्च सम्भूष्य सम्पाद्य च प्रकाशितः— ४००.००

१२. **तत्त्वबिन्दुः** : श्रीवाचस्पतिमिश्रप्रणीतोऽयं ग्रन्थः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य विश्वविश्रुतस्य सरस्वतीभवन-पुस्तकालयस्य हस्तलिखितपाण्डुलिपिमाधारीकृत्य डॉ. रजनीशकुमारशुक्लेन सम्पादितः प्रकाशतामानीतः— १२०.००

१३. **शिवलीलार्णवः** : महाकविना श्रीनीलकण्ठदीक्षितेन प्रणीतं द्वाविंशसर्गात्मकं महाकाव्यमिदं भगवतः शिवस्य चतुष्षष्टिलीलानां लालित्यपूर्णं वर्णनं प्रस्तौति। सुविस्तृतया भूमिकया विविधैः परिशिष्टैश्च सम्भूष्य डॉ. ददन-उपाध्यायेन सम्पादितमिदं महाकाव्यं प्रकाशितम्— २००.००

---

***पत्रव्यवहारसङ्केतः*— निदेशकः**, प्रकाशनसंस्थानस्य, सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणसी-२२१००२